॥ अर्हम् ॥

# किञ्चित्प्रस्ताविकनिवेदनम् ।

इह हि जगज्जन्तुनिष्कारणबन्धूनां परमपवित्रचरितां तीर्थकृतां विधिपूर्वकवन्दनविधानं विदधाति स्वर्गापवर्गादिसुखसंपत् हरति चानेकभवसञ्चितदुष्कर्मकदम्बकमिति समवधार्य परमकारुणिकचेतोभिरवगतविशुद्धसिद्धान्तसारैः श्रीमच्छान्तिसूरिभिश्चतुर्विधश्रीसङ्घस्य परोपकृतये जिनागम–आवश्यकनिर्युक्ति–विशेषावश्यक–पञ्चाशकाद्यनेकचिरन्तनप्रकरणग्रन्थेभ्यः समुद्धृत्य चैत्यवन्दनविधिबोधबन्धुरं पूजाविधिप्रमुखानेकविचारसारकलितं प्रमाणभूतागमप्रमाणेन निराकृतानेकसन्देहं चैत्यवन्दनसूत्रव्याख्याप्रधानं चैत्यवन्दनमहाभाष्यनामा ग्रन्थः सङ्कलितः ।

यद्यपि ग्रन्थस्यास्य प्रान्तवर्तिना–"इति श्रीशान्त्याचार्यविरचितं चैत्यवन्दनमहाभाष्यं सम्पूर्णम् ।" इत्यनेनोल्लेखेन श्रीशान्त्याचार्या ग्रन्थस्यास्य सङ्ग्रहीतार इति प्रकटमेवावसीयते, तथापीह जिनमतवर्तिष्वनेकेषु गच्छेषु–उत्तराध्ययनबृहद्वृत्तेः कर्ता थिरापद्रगच्छीयवादिवैतालश्रीशान्तिसूरिः १ तिलकमञ्जरीकथाटिप्पनकस्य रचयिता पूर्णतल्लगच्छीयश्रीशान्तिसूरिः २ वार्त्तिकवृत्तेर्विधायकश्चन्द्रकुलीयश्रीवर्द्धमानसूरिशिष्यश्रीशान्तिसूरिः ३ धर्मरत्नप्रकरणस्वोपज्ञवृत्ति–बृहल्लघुपृथ्वीचन्द्रचरित्राणां विरचयिता चन्द्रकुलनभश्चन्द्रश्रीनेमिचन्द्रसूरिशिष्यश्रीशान्तिसूरिः ४ भक्तामरस्तोत्रवृत्तेः प्रणेता खण्डिल्लगच्छीयश्रीशान्तिसूरिः ५ प्रमाणप्रमेयकलिकावृत्तेर्निर्माता श्रीशान्तिसूरिः ६ जीवविचारप्रकरणस्य विधाता श्रीशान्तिसूरिः ७ घटखर्पर–राक्षस–वृन्दावनकाव्यादिवृत्तीनां प्रथयिता श्रीशान्तिसूरिः ८ बृहच्छान्तेः कथयिता श्रीशान्तिसूरिः ९ पर्वपञ्चाशिकायाः (अभिषेकविधेः) प्रणेता श्रीशान्तिसूरिः १० पिण्डैषणाशतकस्य रचयिता श्रीशान्तिसूरिः ११

१ एते श्रीशान्तिसूरयः पिप्पलगच्छप्रवर्तका भवेयुरिति संभाव्यते ।

इत्येते ग्रन्थकर्तृत्वेन सुविदिता अभूवन् परमेतेषां मध्यात्कतमा अस्य प्रस्तुतग्रन्थस्य सङ्गृहीतारः श्रीशान्त्याचार्याः संभवेयुः ? कदा कतमं च महीमण्डलं मण्डयामासुः ? इत्येतद्विषया जिज्ञासा तु—"श्रीशान्त्याचार्यविरचितं चैत्यवन्दनमहाभाष्यम् ।" इत्येतन्मात्रोल्लेखदर्शनेन तथाविधस्वगच्छगुरुपरम्पराद्युपलम्भाभावेन च न परिशाम्यति ।

अस्य ग्रन्थस्य प्रेषकोपिपरिशोधन–त्रिशतगाथापर्यन्तच्छायाविधान–संपूर्णग्रन्थप्रुफावलोकनादिकार्यं मुनिश्रीचतुरविजयादिना कृतम् । अवशिष्टाया दशोत्तरषट्शतगाथायाश्छायासम्पादनं समग्रग्रन्थस्योपरि उपयोगिटिप्पननिवेशनं च वेतनप्रदानेन पण्डितश्रीबेचरदासपार्श्वात्कारितम् ।

अस्य ग्रन्थस्य विषयविवेचनं तु गाथोपरि यथास्थानं सम्यक्प्रकारेण पण्डितश्रीबेचरदासेन निवेशितं तन्न पृथगकारि ।

अस्य संशोधनसमये गवेषणपरेणापि द्वे एव पुस्तके संमुपलब्धे । तत्र प्रथमं श्रीअणहिल्लपुरपत्तनश्रीसङ्घवित्कोशीयं प्राचीनं नात्यशुद्धम् । द्वितीयं पुनः प्रवर्तकश्रीमत्कान्तिविजयकृतसङ्ग्रहपुस्तककोशीयं चिरत्नं शुद्धम् । इत्येते द्वे पुस्तके समवलम्ब्य संशोधितेऽप्यत्र निबन्धे यत्र क्वचनाशुद्धिरवशिष्टा भवेत्तत्र संशोध्य वाचनीयं धीधनैरिति प्रार्थयते—

भावनगरस्था श्रीजैन–आत्मानन्द–संसत् ।



॥ अर्हम् ॥

न्यायाम्भोनिधिश्रीविजयानन्दसूरिपादपद्मेभ्यो नमः ।

सिरिसंतिसूरिविरइअं

# चेइयवंदणमहाभासं ।

पणमह पणमंतसुरा-ऽसुरिंदमणिमउडघट्ठपयपीढं । ऋषभः
सिप्प-कला-ऽऽगम-सिवमग्गदेसयं जिणवरं उसहं॥१॥
प्रणमत प्रणमत्सुरा-ऽसुरेन्द्रमणिमुकुटघृष्टपदपीठम् ।
शिल्प-कला-ऽऽगम-शिवमार्गदेशकं जिनवरमृषभम् ॥ १ ॥

संगमयामरगयऽमाणमाणमायंगमद्दणमयंदं । वीरः
पणमह वीरं तित्थस्स नायगं वट्टमाणस्स ॥ २ ॥
संगमकाऽमरगताऽमानमानमातङ्गमर्दनमृगेन्द्रम् ।
प्रणमत वीरं तीर्थस्य नायकं वर्त्तमानस्य ॥ २ ॥

संसारगहिरसायरपडंतजंतूण तारणप्पवणे । तीर्थङ्कराः
तीया ऽणागय-संते, वंदे सव्वे वि तित्थयरे ॥ ३ ॥
संसारगभीरसागरपतज्जन्तूनां तारणप्रवणान् ।
अतीता-ऽनागत-सतो वन्दे सर्वानपि तीर्थंकरान् ॥ ३ ॥

जम्मुहमहद्दहाओ, दुवालसंगी महानई वूढा । गणधराः
ते गणहरकुलगिरिणो, सव्वे वंदामि भावेण ॥ ४ ॥
यन्मुखमहाद्रहाद्द्वादशाङ्गी महानदी व्यूढा ।
तान् गणधरकुलगिरीन् सर्वान् वन्दे भावेन ॥ ४ ॥

नमिऊण समणसंघं, संघायारं समासओ वुच्छं । ग्रन्थाभिधेयं संघश्च
चेइयवंदणविसयं, सुत्तायरणाऽणुसारेणं ॥ ५ ॥
नत्वा श्रमणसङ्घं सङ्घाचारं समासतो वक्ष्ये ।
चैत्यवन्दनविषयं सूत्राऽऽचरणानुसारेण ॥ ५ ॥

संघो महाणुभावो, अमरिंद-णरिंदवंदिओ एसो ।
तित्थयरेहि वि नियमा, पणमिज्जइ देसणारंभे ॥६॥

सङ्घो महानुभावोऽमरेन्द्र—नरेन्द्रवन्दित एषः ।
तीर्थकरैरपि नियमात्प्रणम्यते देशनारम्भे ॥ ६ ॥

वाचकसाक्ष्यम्

ता एयसमायारो, कित्तिज्जंतो वि कुणइ कल्लाणं ।
पोसेइ पुन्नमउलं, वायगगंथे जओ भणियं ॥ ७ ॥

तत एतत्समाचारः कीर्त्यमानोऽपि करोति कल्याणम् ।
पोषयति पुण्यमतुलं वाचकग्रन्थे यतो भणितम् ॥ ७ ॥

जे तित्थयरपणीया, भावा तयणंतरेहि परिकहिआ ।
बहुसो वि तेसि परिकित्तणेण पुन्नं लहइ पुट्ठिं ॥८॥

ये तीर्थकरप्रणीता भावास्तदनन्तरैः परिकथिताः ।
बहुशोऽपि तेषां परिकीर्त्तनेन पुण्यं लभते पुष्टिम् ॥ ८ ॥

ग्रन्थहेतुः

अइगरुयभत्तिबहुमाणचोइओ मंदबुद्धिबोहत्थं ।
सूरिपरंपरपत्तं, कित्तेमि अहं पि तं तत्तो ॥ ९ ॥

अतिगुरुकभक्तिबहुमानचोदितो मन्दबुद्धिबोधार्थम् ।
सूरिपरम्पराप्राप्तं कीर्त्तयाम्यहमपि तं ततः ॥ ९ ॥

वन्दनाफलम्

अहिगारिणा उ काले, कायव्वा वंदणा जिणाईणं ।
दंसणसुद्धिनिमित्तं, कम्मक्खयमिच्छमाणेण ॥ १० ॥

अधिकारिणा तु काले कर्त्तव्या वन्दना जिनादीनाम् ।
दर्शनशुद्धिनिमित्तं कर्मक्षयमिच्छता ॥ १० ॥

अधिकारी

संवेगयरो जीवो, अहिगारी वंदणाएँ तत्तेणं ।
कालो य तिन्नि संझा, सामन्नेणेत्थ विन्नेओ ॥ ११ ॥

---

१. वाचको नाम तत्त्वार्थसूत्राद्यनेकग्रन्थविधाता श्रीउमास्वातिवाचकः ।

२. वाचकग्रन्थे यद् भणितं तदिदम्—"ये तीर्थकृत्प्रणीता भावास्तदनन्तरैः परिकथिताः । तेषां बहुशोऽप्यनुकीर्तनं भवति पुष्टिकरमेव ॥ १२ ॥" प्रशमरतौ पीठबन्धाधिकारे ।

सङ्क्तेतरो जीवोऽधिकारी वन्दनायां तत्त्वेन ।
कालश्च तिस्रः सन्ध्याः सामान्येनात्र विज्ञेयः ॥ ११ ॥

भावजिणप्पमुहाणं, सवेसिं चेव वंदणा जइ वि । चैत्यवन्दनार्थः
जिणचेइयाण पुरओ, कीरइ चिइवंदणा तेण ॥ १२ ॥

भावजिनप्रमुखाणां सर्वेषां चैव वन्दना यद्यपि ।
जिनचैत्यानां पुरतः क्रियते चैत्यवन्दना तेन ॥ १२ ॥

जिणबिंबाभावे पुण, ठवणा गुरुसक्खिया वि कीरंती ।
चिइवंदण चिय इमा, नायवा निउणबुद्धीहिं ॥ १३ ॥

जिनबिम्बाभावे पुनः स्थापना गुरुसाक्षिक्यपि क्रियमाणा ।
चैत्यवन्दना खल्विमा ज्ञातव्या निपुणबुद्धिभिः ॥ १३ ॥

अहवा जत्थ वि तत्थ वि, पुरओ परिकप्पिऊण जिणबिंबं ।
कीरइ बुहेहिं एसा, नेया चिइवंदणा तम्हा ॥ १४ ॥

अथवा यत्रापि तत्रापि पुरतः परिकल्प्य जिनबिम्बम् ।
क्रियते बुधैरेषा ज्ञेया चैत्यवन्दना तस्मात् ॥ १४ ॥

तीसे करणविहाणं, नज्जइ सुत्ताणुसारओ किं पि । सूत्रानुसारता, संविग्नाऽऽचरणा च
संविग्गायरणाओ, किंची उभयं पि तं भणिमो ॥ १५ ॥

तस्याः करणविधानं ज्ञायते सूत्रानुसारतः किमपि ।
संविग्नाचरणातः किञ्चिदुभयमपि तद्भणामः ॥ १५ ॥

पुच्छइ सीसो भयवं!, सुत्तोइयमेव साहिउं जुत्तं । शिष्यपृच्छा
किं वंदणाहिगारे, आयरणा कीरइ सहाया? ॥ १६ ॥

पृच्छति शिष्यो भगवन्! सूत्रोदितमेव कथयितुं युक्तम् ।
किं वन्दनाधिकारे आचरणया क्रियते सहायता? ॥ १६ ॥

आयरिओ—

दीसइ सामन्नेणं, वुत्तं सुत्तम्मि वंदणविहाणं । आचार्यप्रतिवचः
नज्जइ आयरणाओ, विसेसकरणक्कमो तस्स ॥ १७ ॥

आचार्यः—

दृश्यते सामान्येनोक्तं सूत्रे वन्दनविधानम् ।
ज्ञायते आचरणातो विशेषकरणक्रमस्तस्य ॥ १७ ॥

सूत्रशब्दार्थः परंपराऽऽचरणाप्रामाण्यं च

सूयणमेत्तं सुत्तं, आयरणाओ य गम्मइ तयत्थो ।
सीसायरियक्कमेण हि, नज्जंते सिप्पसत्थाइं ॥ १८ ॥

सूचनमात्रं सूत्रमाचरणातश्च गम्यते तदर्थः ।
शिष्याचार्यक्रमेण हि ज्ञायन्ते शिल्पशास्त्राणि ॥ १८ ॥

अन्नं च—

श्रुतगाम्भीर्यम्

अंगो-वंग-पइन्नयभेया सुअसागरो खलु अपारो ।
को तस्स मुणइ मज्झं, पुरिसो पंडिचमाणी वि ?॥१९॥

अन्यच—

अङ्गो-पाङ्ग-प्रकीर्णकभेदात् श्रुतसागरः खल्वपारः ।
कस्तस्य जानाति मध्यं पुरुषः पण्डितमानी अपि ?॥१९॥

वन्दनायाः सूत्रविधेयता

किंतु सुहझाणजणगं, जं कम्मखयावहं अणुट्ठाणं ।
अंगसमुद्दे रुद्दे, भणियं चिय तं तओ भणियं ॥२०॥

किन्तु शुभध्यानजनकं यत्कर्मक्षयावहमनुष्ठानम् ।
अङ्गसमुद्रे रौद्रे भणितं खलु तत्ततो भणितम् ॥ २० ॥

सव्वप्पवायमूलं, दुवालसंगं जओ समक्खायं ।
रयणायरतुल्लं खलु, ता सव्वं सुंदरं तम्मि ॥ २१ ॥

सर्वप्रवादमूलं द्वादशाङ्गं यतः समाख्यातम् ।
रत्नाकरतुल्यं खलु तस्मात्सर्वं सुन्दरं तस्मिन् ॥ २१ ॥

मूलश्रुतव्युच्छेदः

वोच्छिन्ने मूलसुए, बिंदुपमाणम्मि संपइ धरंते ।
आयरणाओ नजइ, परमत्थो सव्वकज्जेसु ॥ २२ ॥

व्युच्छिन्ने मूलश्रुते बिन्दुप्रमाणे सम्प्रति ध्रियमाणे ।
आचरणातो ज्ञायते परमार्थः सर्वकार्येषु ॥ २२ ॥

भणियं च—

वहुसुयकमाणुपत्ता, आयरणा धरइ सुत्तविरहे वि । आयरणाप्रामाण्यदृढीकारः
विज्झाए वि पईवे, नज्जइ दिट्ठं सुदिट्ठीहिं ॥ २३ ॥

भणितं च—

वहुश्रुतक्रमानुप्राप्ताऽऽचरणा ध्रियते सूत्रविरहेऽपि ।
विध्यातेऽपि प्रदीपे ज्ञायते दृष्टं सुदृष्टिभिः ॥ २३ ॥

जीवियपुव्वं जीवइ, जीविस्सइ जेण धम्मियजणम्मि । जीत-शब्दार्थः
जीयं ति तेण भन्नइ, आयरणा समयकुसलेहिं ॥२४॥

जीवितपूर्वं जीवति जीविष्यति येन धार्मिकजने ।
'जी(वि)तम्' इति तेन भण्यते आचरणा समयकुशलैः २४

तम्हा अनायमूला, हिंसारहिया सुझाणजणणी य । आचरणायाः सूत्रसादृश्यम्
सूरिपरंपरपत्ता, सुत्त व पमाणमायरणा ॥ २५ ॥

तस्मादज्ञातमूला हिंसारहिता सुध्यानजननी च ।
सूरिपरम्पराप्राप्ता सूत्रमिव प्रमाणमाचरणा ॥ २५ ॥

जह एगं जिणबिंबं, तिन्नि व पंच व तहा चउवीसं । जिनविम्बादि-प्रयोजनम्
सत्तरसयं पि केई, कारेंति विचित्तपणिहाणा ॥ २६ ॥

यथैकं जिनबिम्बं त्रीणि वा पञ्च वा तथा चतुर्विंशतिम् ।
सप्ततिशतमपि केऽपि कारयन्ति विचित्रप्रणिधानात्(नाः) ॥

जिणरिद्धिदंसणत्थं, एगं कारेइ कोइ भत्तिजुओ ।
पायडियपाडिहेरं, देवागमसोहियं चेव ॥ २७ ॥

जिनर्द्धिदर्शनार्थमेकं कारयति कोऽपि भक्तियुतः ।
प्रकटितप्रातिहार्यं देवागमशोभितं चैव ॥ २७ ॥

दंसण-नाण-चरित्ता-ऽऽराहणकज्जे जिणत्तिअं कोइ ।
परमेट्ठिनमोकारं, उज्जमियं कोइ पंच जिणे ॥ २८ ॥

दर्शन-ज्ञान-चारित्राऽऽराधनकार्ये जिनत्रिकं कोऽपि ।
परमेष्ठिनमस्कारमुद्यमितं कोऽपि पञ्च जिनान् ॥ २८ ॥

कल्लाणयतवमहवा, उज्जमियं भरहवासभावि त्ति ।
बहुमाणविसेसाओ, केई कारेंति चउवीसं ॥ २९ ॥

कल्याणकतपोऽथवोद्यमितं भरतवर्षभाविन इति ।
बहुमानविशेषात्केऽपि कारयन्ति चतुर्विंशतिम् ॥ २९ ॥

उक्कोस सत्तरिसयं, नरलोए विहरइ त्ति भत्तीए ।
सत्तरिसयं पि कोइ, विंबाणं कारइ धणड्ढो ॥ ३० ॥

उत्कृष्टं सप्ततिशतं नरलोके विहरतीति भक्त्या ।
सप्ततिशतमपि कोऽपि बिम्बानां कारयति धनाढ्यः ॥३०॥

सूरिविहित-प्रतिष्ठा

इय बहुविहबिंबाइं, सूरीहिँ पइट्ठियाइँ दीसंति ।
भवियाणंदकराइं, पभावगाइं पवयणस्स ॥ ३१ ॥

इति बहुविधबिम्बानि सूरिभिः प्रतिष्ठितानि दृश्यन्ते ।
भविका(न्या)नन्दकराणि प्रभावकाणि प्रवचनस्य ॥ ३१ ॥

सूत्रविहित-जिनबिम्बम्

सुत्ते पुण अट्ठसयं, सासयभवणाण देवछंदेसु ।
सुव्वइ जिणपडिमाणं, न निसेहो अन्नहाकरणे ॥ ३२ ॥

सूत्रे पुनरष्टशतं शाश्वतभवनानां देवच्छन्देषु ।
श्रूयते जिनप्रतिमानां न निषेधोऽन्यथाकरणे ॥ ३२ ॥

ता सुत्ताऽपडिसिद्धा, पवयणसोहावहा चिरपवत्ता ।
सव्वा न दूसिअव्वा, आयरणा मुत्तिकामेहिं ॥ ३३ ॥

तस्मात्सूत्राऽप्रतिषिद्धा प्रवचनशोभावहा चिरप्रवृत्ता ।
सर्वा न दूषयितव्याऽऽचरणा मुक्तिकामैः ॥ ३३ ॥

पृच्छा श्रीहरिभद्रसूरिप्रामाण्यं च

जइ एवं किं भणिया, तिविहा हरिभद्दसूरिणा सुत्ते ।
जिणबिंबस्स पइट्ठा?, जं भणिओ तत्थ एसत्थो ॥३४॥

यद्येवं किं भणिता त्रिविधा हरिभद्रसूरिणा सूत्रे ।
जिनबिम्बस्य प्रतिष्ठा? यद्भणितस्तत्रैषोऽर्थः ॥ ३४ ॥

---

१. याकिनीमहत्तरासुनुना हरिभद्रभगवता. । २. सूत्रे षोडशकरूपे ।

वत्तिपइट्ठा एगा, खित्तपइट्ठा महापइट्ठा य ।
एगे-चउवीस-सत्तरसयाण सा होइ अणुकमसो ॥३५॥
व्यक्तिप्रतिष्ठैका क्षेत्रप्रतिष्ठा महाप्रतिष्ठा च ।
एक-चतुर्विंशति-सप्ततिशतानां सा भवत्यनुक्रमतः ॥३५॥

भन्नइ तिविहपइट्ठाउवलक्खणमेव तत्थ तं भणियं ।
अवधारणविरहाओ, ओसरणाइपइट्ठाओ ॥ ३६ ॥ प्रतिवचः
भण्यते त्रिविधप्रतिष्ठोपलक्षणमेव तत्र तद्भणितम् ।
अवधारणविरहादवसरणादिप्रतिष्ठाः ॥ ३६ ॥

चोयगो—

सव्वमसंगयमेयं, रूढं जमणेगबिंबकारवणं । पृच्छा
आसायणा महंती, जं पयडा दीसए एत्थ ॥ ३७ ॥

चोदकः—

सर्वमसंगतमेतद्रूढं यदनेकबिम्बकारणम् ।
आशातना महती यत्प्रकटा दृश्यतेऽत्र ॥ ३७ ॥
बिंबं महंतमेगं, सेसाणि लहूणि कारयंतेण ।
गरुयलहुयं तेसिं, पयडिज्जइ समगुणाणं पि ॥३८॥
बिम्बं महदेकं शेषाणि लघूनि कारयता ।
गुरुलघुत्वं तेषां प्रकट्यते समगुणानामपि ॥ ३८ ॥
पूआवंदणमाई, काऊणेगम्मि सेसकरणम्मि ।
नायग सेवगभावो, होइ कओ लोगनाहाणं ॥ ३९ ॥
पूजावन्दनादि कृत्वैकस्मिन् शेषकरणे ।
नायक-सेवकभावो भवति कृतो लोकनाथानाम् ॥ ३९ ॥

एगस्सायरसारा, कीरइ पूआऽवरेसि थोवयरी ।
एसावि महाऽवन्ना, लक्खिज्जइ निउणबुद्धीहिं ॥४०॥
एकस्यादरसारा क्रियते पूजाऽपरेषां स्तोकतरा ।
एषाऽपि महाऽवज्ञा लक्ष्यते निपुणबुद्धिभिः ॥ ४० ॥

ण्हाणोदगाइसंगो, लोगविरुद्धो परुप्परं तेसिं ।
लोगोत्तमभावाओ, बहु मन्निज्जइ न हु बुहेहिं ॥४१॥
स्नानोदकादिसङ्गो लोकविरुद्धः परस्परं तेषाम् ।
लोकोत्तमभावाद्बहु मन्यते न खलु बुधैः ॥ ४१ ॥

अह कोइ सबुद्धीए, ण्हवेइ एगं न सेसबिंबाणि ।
पंतिगयवंचणं पिव, मन्ने एयं महापावं ॥ ४२ ॥
अथ कोऽपि स्वबुद्ध्या स्नपयत्येकं न शेषबिम्बानि ।
पङ्क्तिगतवञ्चनमिव मन्ये एतन्महापापम् ॥ ४२ ॥

विणिवारिउं न सक्का, एवं आसायणा बहुपगारा ।
ता एगबिंबकरणं, सेयं मन्नामि गुरुराह ॥ ४३ ॥
विनिवारयितुं न शक्यैवमाशातना बहुप्रकारा ।
तस्मादेकबिम्बकरणं श्रेयो मन्ये गुरुराह ॥ ४३ ॥

प्रतिवचः एवं जिणभवणम्मि वि, बीयं बिंबं न कारियं जुत्तं ।
तत्थ वि संभवइ जओ, पुव्वोइयदोसरिंछोली[1] ॥४४॥
एवं जिनभवनेऽपि द्वितीयं बिम्बं न कारितं युक्तम् ।
तत्रापि संभवति यतः पूर्वोदितदोषपङ्क्तिः ॥ ४४ ॥

परवचनम् भणइ परो सच्चमिणं, सम्मयमेयं पि सुहुमबुद्धीणं ।
प्रतिवचः भन्नइ गुरुणा सुंदर!, सुत्तविरुद्धं इमं वयणं ॥४५॥
भणति परः सत्यमिदं सम्मतमेतदपि सूक्ष्मबुद्धीनाम् ।
भण्यते गुरुणा सुन्दर! सूत्रविरुद्धमिदं वचनम् ॥ ४५ ॥

---

१. देशीप्राकृतशब्दोऽयम्, तथा च—"रिंछोली पंतीए ।" देशीनाममालायां सप्तमे वर्गे सप्तम्यां गाथायाम् । "ओली माला राई रिंछोली आवली पंती" ॥१०६॥ पाइअलच्छीनाममाला.

अट्ठसयं पडिमाणं, सासयभवणेसु वन्नियं सुत्ते ।
अट्ठावयम्मि चउवीस मज्झगेहे तत्तो बाहिं ॥ ४६ ॥

अष्टशतं प्रतिमानां शाश्वतभवनेषु वर्णितं सूत्रे ।
अष्टापदे चतुर्विंशतिर्मध्यगेहे ततो बहिः ॥ ४६ ॥

चउमुह-तिदार-मुहपेच्छ-मंडवा थूभ-पडिम-चिइरुक्खे ।
इंदज्झय-पुक्खरिणी, पत्तेयं चउसु वि दिसासु ॥४७॥

चतुर्मुख-त्रिद्वार-मुखप्रेक्षा-मण्डपाः स्तूप-प्रतिमा-चैत्यवृक्षाः ।
इन्द्रध्वज-पुष्करिणी प्रत्येकं चतसृष्वपि दिक्षु ॥ ४७ ॥

नंदीसरे वि दीवे, एसो चिय बाहिरो परीवारो ।
वन्निज्जइ सिद्धंते, पडिमट्ठसयं च मज्झम्मि ॥ ४८ ॥

नन्दीश्वरेऽपि द्वीपे एष एव बाह्यः परिवारः ।
वर्ण्यते सिद्धान्ते प्रतिमाष्टशतं च मध्ये ॥ ४८ ॥

इय सुत्तपमाणाओ, आयरणाओ य एगभवणम्मि ।
सइ सामत्थे जुत्तं, कारवणमणेगबिंबाणं ॥ ४९ ॥

इति सूत्रप्रमाणादाचरणातश्चैकभवने ।
सति सामर्थ्ये युक्तं कारणमनेकबिम्बानाम् ॥ ४९ ॥

नायग-सेवगबुद्धी, न होइ एएसु जाणगजणस्स ।
पेच्छंतस्स समाणं, परिवारं पाडिहेराइ ॥ ५० ॥

नायक-सेवकबुद्धिर्न भवत्येतेषु ज्ञायकजनस्य ।
प्रेक्षमाणस्य समानं परिवारं प्रातिहार्यादिम् ॥ ५० ॥

ववहारो पुण पढमं, पइट्ठिओ मूलनायगो एस ।
अवणिज्जइ सेसाणं, नायगभावो न उण तेण ॥५१॥

व्यवहारः पुनः प्रथमं प्रतिष्ठितो मूलनायक एषः ।
अपनीयते शेषाणां नायकभावो न पुनस्तेन ॥ ५१ ॥

चंदण-पूयण-बलिढोयणेसु एगस्स कीरमाणेसु ।
आसायणा न दिट्ठा, उचियपवित्तिस्स पुरिसस्स ॥५२

वन्दन-पूजन-बलिढौकनेष्वेकस्य क्रियमाणेषु ।
आशातना न दृष्टोचितप्रवृत्तेः पुरुषस्य ॥ ५२ ॥

कल्लाणगाइकज्जा, एगस्स विसेसपूअकरणे वि ।
नावन्नापरिणामो, धम्मियलोअस्स सेसेसु ॥ ५३ ॥

कल्याणकादिकार्यादेकस्य विशेषपूजाकरणेऽपि ।
नावज्ञापरिणामो धार्मिकलोकस्य शेषेषु ॥ ५३ ॥

जह मिम्मयपडिमाए, पूआ पुप्फाइएहिं खलु उचिया ।
कणयाइनिम्मिआणं, उचियतमा मज्जणाई वि ॥५४॥

यथा मृन्मयप्रतिमायाः पूजा पुष्पादिभिः खलूचिता ।
कनकादिनिर्मितानामुचिततमा मज्जनादयोऽपि ॥ ५४ ॥

उचियपवित्ती सव्वा, बुहेण आसायणा न वत्तव्वा ।
तयभावे पडिसेहो, पडिमाणाऽऽसायणा गरुई ॥ ५५

उचितप्रवृत्तिः सर्वा बुधेनाशातना न वक्तव्या ।
तदभावे प्रतिषेधः प्रतिमानामाशातना गुर्वी ॥ ५५ ॥

वाचकप्रमाणता　जं वायगेण भणियं, अंगुट्ठपमाणबिंबकारी वि ।
सग्गा-ऽपवग्गसंसग्गसुत्थिओ नियमओ होइ ॥५६॥

यद् वाचकेन भणितमङ्गुष्ठप्रमाणबिम्बकार्यपि ।
स्वर्गा-ऽपवर्गसंसर्गसुस्थितो नियमतो भवति ॥ ५६ ॥

कारवणे पुन्नं विव, बिंबाण निवारणे महापावं ।
लाभच्छेयं सुंदर!, सम्मं भावेंति मज्झत्था ॥ ५७ ॥

कारणे पुण्यमिव बिम्बानां निवारणे महापापम् ।
लाभच्छेदं सुन्दर ! सम्यग्भावयन्ति मध्यस्थाः ॥ ५७ ॥

मिच्छासायणदंसी !, न मुणसि विंबंतरायमइपावं ।
विंधसि सरेण वालं, चुकसि तं मंदरगिरिस्स ॥ ५८
मिथ्याशातनादर्शिन्! न जानासि बिम्बान्तरायमतिपापम् ।
विध्यसि शरेण व्यालं भ्रश्यसे त्वं मन्दरगिरेः ॥ ५८ ॥

अन्नं च—

आसायणा अवन्ना, अणायरो भोग दुप्पणीहाणं । आशातनानामानि
अणुचियवित्ती सव्वा, वज्जेयव्वा पयत्तेण ॥ ५९ ॥

अन्यच्च—

आशातनाऽवज्ञाऽनादरो भोगो दुष्प्रणिधानम् ।
अनुचितवृत्तिः सर्वा वर्जयितव्या प्रयत्नेन ॥ ५९ ॥

पायपसारण पल्लत्थिबंधणं बिंबपट्टिदाणं च । अवज्ञाशातनास्वरूपम्
उच्चासणसेवणया, जिणपुरओ भन्नइ अवन्ना ॥ ६० ॥
पादप्रसारणं पर्यस्तिबन्धनं बिम्बपृष्ठिदानं च ।
उच्चासनसेवनता जिनपुरतो भण्यतेऽवज्ञा ॥ ६० ॥

जारिसतारिसवेसो, जहा तहा जम्मि तम्मि कालम्मि । अनादराशातनास्वरूपम्
पूआइ कुणइ सुन्नो, अणायरासायणा एसा ॥ ६१ ॥
यादृक्तादृग्वेषो यथा तथा यस्मिँस्तस्मिन् काले ।
पूजादि करोति शून्योऽनादराऽऽशातनैषा ॥ ६१ ॥

भोगो दसप्पयारो, कीरंतो जिणवरिंदभवणम्मि । भोगाशातनास्वरूपम्
आसायण त्ति याढं, वज्जेयव्वो जओ वुत्तं ॥ ६२ ॥
भोगो दशप्रकारः क्रियमाणो जिनवरेन्द्रभवने ।
आशातनेति याढं वर्जयितव्यो यत उक्तम् ॥ ६२ ॥

तम्बोल-पाण-भोयण-वाणह-थीभोग-सुयण-निट्ठुयणं । दशप्रकारो भोगः
मुत्तु-च्चारं जूयं, वज्जे जिणमंदिरस्संतो ॥ ६३ ॥
ताम्बूल-पान-भोजनो-पान-स्त्रीभोग-स्वपन-निष्ठीवनम् ।
मूत्रो-च्चारं द्यूतं वर्जयेज्जिनमन्दिरस्यान्तः ॥ ६३ ॥

दुष्प्रणिधानाशातनास्वरूपम्

रागेण व दोसेण व, मोहेण व दूसिया मणोवित्ती ।
दुप्पडिहाणं भन्नइ, जिणविसए तं न कायव्वं ॥ ६४ ॥

रागेण वा दोषेण वा मोहेन वा दुष्टा(दूषिता)मनोवृत्तिः ।
दुष्प्रतिधानं भण्यते जिनविषये तन्न कर्त्तव्यम् ॥ ६४ ॥

अनुचितवृत्त्याशातनास्वरूपम्

विकहा धरणयदाणं, कलहविवायाइगेहकिरियाओ ।
अणुचियवित्ती सव्वा, परिहरियव्वा जिणगिहम्मि॥६५

विकथा धरणकदानं कलहविवादादिगेहक्रियाः ।
अनुचितवृत्तिः सर्वा परिहर्त्तव्या जिनगृहे ॥ ६५ ॥

जइ आसायणभीरू, सुंदर! एयाओ परिहरिज्जासु ।
अलियासायणसंकी, मा जिणभवणाइँ दूसेसु ॥६६॥

यद्याशातनाभीरुः सुन्दर! एताः परिहर ।
अलीकाशातनाशङ्की मा जिनभवनानि दूषय ॥ ६६ ॥

एगम्मि वि जिणबिंबे, दिट्ठे हिययस्स होइ आणंदो ।
अहियाहियदंसणओ, अइप्पमाणो पवित्थरइ ॥ ६७॥

एकस्मिन्नपि जिनविम्बे दृष्टे हृदयस्य भवत्यानन्दः ।
अधिकाधिकदर्शनतोऽतिप्रमाणः प्रविस्तृणोति ॥ ६७ ॥

अणुहवसिद्धं एयं, पायं भव्वाण सुद्धबुद्धीणं ।
मयलिज्जइ जाण मणो, अन्नाणवियंभियं तेसिं ॥६८॥

अनुभवसिद्धमेतत्प्रायो भव्यानां शुद्धबुद्धीनाम् ।
मलिन्यते येषां मन अज्ञानविजृम्भितं तेषाम् ॥ ६८ ॥

*जो एगचेइअगिहे, जिणबिंबविहावणे गुणो भणिओ ।*
चउवीसवट्टयाइसु, सो चेव बुहेण विन्नेओ ॥ ६९ ॥

य एकचैत्यगृहे जिनविम्बविधापने गुणो भणितः ।
चतुर्विंशतिपट्टकादिषु स एव बुधेन विज्ञेयः ॥ ६९ ॥

जं पुण लोगविरुद्धं, ण्हाणुदयाईण संगमे भणसि । पुनः प्रतिवचः
तत्थ वि मज्झत्थमणो, निसुणसु साहेमि परमत्थं ७०

यत्पुनर्लोकविरुद्धं स्नानोदकादीनां संगमे भणसि ।
*तत्रापि मध्यस्थमनाः निःशृणु कथयामि परमार्थम् ॥ ७० ॥*

असुइमलपूरियंगा, खलिमलकलुसीकयं सिणाणजलं ।
अहिमाणधणा पुरिसा, अन्नोन्नं नेव विसहंति ॥७१॥

अशुचिमलपूरिताङ्गाः कल्मलकलुषीकृतं स्नानजलम् ।
अभिमानधनाः पुरुषा अन्योन्यं नैव विषहन्ते ॥ ७१ ॥

जुत्तो सो ववहारो, समाणपुरिसाण असुइदेहाणं ।
सुहपोग्गलघडिआणं, पडिमाण न जुज्जए वोत्तुं ॥७२

युक्तः स व्यवहारः समानपुरुषाणामशुचिदेहानाम् ।
शुभपुद्गलघटितानां प्रतिमानां न युज्यते वक्तुम् ॥ ७२ ॥

जलमज्झे घोलंतं, नरपडिबिंबं न दूसए उदयं ।
पडिमाजलं पि एवं, अन्नोन्नं लग्गमाणं पि ॥ ७३ ॥

जलमध्ये घूर्णमानं नरप्रतिबिम्बं न दूषयेदुदकम् ।
प्रतिमाजलमप्येवमन्योन्यं लगदपि ॥ ७३ ॥

पडिमापडिबिंबाणं, भेओ विउसाण सम्मओ नेय । प्रतिमा-प्रतिबिम्बयोः समानार्थत्वम् अभिधानकाण्डसाक्ष्यम्
जं एगत्था सद्दा, एए अभिहाणकंडेसु ॥ ७४ ॥

प्रतिमा-प्रतिबिम्बयोर्भेदो विदुषां सम्मतो नैव ।
यदेकार्थाः शब्दा एतेऽभिधानकाण्डेषु ॥ ७४ ॥

पडिबिंबं पडिरूवं, पडिमाणं पडिकियं पडिच्छंदं ।
पडिकायं च पडितणुं, भणंति पडिजायणं छायं॥७५

---

१ "भणिंति" इत्यपि ॥ २ अभिधानवचनानि चैवम्—पडिमा पडिबिंबं" (६६०) पाइअलच्छीनाममाला । "प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिः ॥"—अमरकोशे २० वर्गे ३६ श्लोकः । "अर्चा तु प्रतिमा यातना निधिः ॥ ९९ ॥ छाया छन्दः कायो रूपं बिम्बं मान-कृती अपि ॥" श्रीअभिधानचिन्तामणौ सामान्यकाण्डे ।

प्रतिबिम्बं प्रतिरूपं प्रतिमानं प्रतिकृतं प्रतिच्छन्दः ।
प्रतिकायं च प्रतितनु भणन्ति प्रतियातनां छायाम् ॥ ७५

जइ ता ससरीराण वि, पडिबिंबं नेव दूसए उदयं ।
असरीराण जिणाणं, बिंबे काऽऽसायणासंका ? ॥७६

यदि तावत् सशरीराणामपि प्रतिबिम्बं नैव दूषयेदुदकम् ।
अशरीराणां जिनानां बिम्बे काऽऽशातनाशङ्का ? ॥ ७६ ॥

अशरीराणामाकारविधानहेतुः

जं पुण असरीराणं, अंगोवंगाइसंगया मुत्ती ।
तत्थ वि निमित्तमेयं, उवइट्ठं पुव्वसूरीहिं ॥ ७७ ॥

यत्पुनरशरीराणामङ्गोपाङ्गादिसंगता मूर्त्तिः ।
तत्रापि निमित्तमेतदुपदिष्टं पूर्वसूरिभिः ॥ ७७ ॥

स्मृतिनिमित्तं बिम्बम्

अरहंता भगवंता, असरीरा निम्मला सिवं पत्ता ।
तेसिं संभरणत्थं[1], पडिमाओ एत्थ कीरंति ॥ ७८ ॥

अर्हन्तो भगवन्तोऽशरीरा निर्मलाः शिवं प्राप्ताः ।
तेषां संस्मरणार्थं प्रतिमा अत्र क्रियन्ते ॥ ७८ ॥

प्रतिमासंस्थानम्

उद्धट्ठाणठियाओ, अहवा पलियंकसंठिआ ताओ ।
मुत्तिगयाणं तासिं, जं तइयं नत्थि संठाणं ॥ ७९ ॥

ऊर्ध्वस्थानस्थिता अथवा पल्यङ्कसंस्थितास्ताः ।
मुक्तिगतानां तेषां यत्तृतीयं नास्ति संस्थानम् ॥ ७९ ॥

भणियं च—

उसभो अरिट्ठनेमी, वीरो पलियंकसंठिया सिद्धा ।
अवसेसा तित्थयरा, उद्धट्ठाणेण उवयंति ॥ ८० ॥

---

१ "संभवणत्थं" इत्यपि पाठः ।

भणितं च—

ऋषभोऽरिष्टनेमिर्वीरः पल्यङ्कसंस्थिताः सिद्धाः ।
अवशेषास्तीर्थंकरा ऊर्द्धस्थानेनोपयान्ति ॥ ८० ॥

जं संठाणं तु इहं, भवं चयंतस्स चरिमसमयम्मि ।
आसी य पएसघणं, तं संठाणं तहिं तस्स[1] ॥ ८१ ॥

यत्संस्थानं त्विह भवं त्यजतश्चरमसमये ।
आसीच्च प्रदेशघनं तत्संस्थानं तत्र तस्य ॥ ८१ ॥

मुत्तिपयसंठियाण वि, परिवारो पाडिहेरपामोक्खो । प्रातिहार्यप्रयोजनम्
पडिमाण निम्मविज्जइ, अवत्थतियभावणनिमित्तं ८२

मुक्तिपदसंस्थितानामपि परिवारः प्रातिहार्यप्रमुखः ।
प्रतिमानां निर्माप्यतेऽवस्थात्रिकभावनानिमित्तम् ॥ ८२ ॥

जं पुण भणंति केई, ओसरणजिणस्स रूवमेयं तु । केषांचिन्मतम्
जणववहारो एसो, परमत्थो एरिसो एत्थं ॥ ८३ ॥

यत्पुनर्भणन्ति केऽपि अवसरणजिनस्य रूपमेतत्तु ।
जनव्यवहार एष परमार्थ ईदृशोऽत्र ॥ ८३ ॥

सिंहासणे निसन्नो, पाए ठविऊण पायपीढम्मि ।
करधरियजोगमुद्दो, जिणनाहो देसणं कुणइ ॥ ८४ ॥

सिंहासने निषण्णः पादौ स्थापयित्वा पादपीठे ।
करधृतयोगमुद्रो जिननाथो देशनां करोति ॥ ८४ ॥

तेणं चिय सूरिवरा, कुणंति वक्खाणमेयमुद्दाए ।
जं ते जिणपडिरूवा, धरंति मुहपोत्तियं नवरं ॥८५॥

तेन खलु सूरिवराः कुर्वन्ति व्याख्यानमेतन्मुद्रया ।
यत्ते जिनप्रतिरूपा धरन्ति मुखवस्त्रिकां नवरम् ॥ ८५ ॥

---

[1] इयं गाथा आवश्यके ९६९ तमा (पृ० ४४४)।

पुनरपि प्रति-वाक्यम्

सिद्धपडिमासु एवं, एगंतसुईसु असुइसंकप्पो ।
आसायणभीरूण वि, गुरुतरमासायणं कुणइ ॥८६॥
सिद्धप्रतिमास्वेवमेकान्तशुचिषु अशुचिसंकल्पः ।
आशातनाभीरूणामपि गुरुतरामाशातनां करोति ॥८६॥

मलरहियाणं ण्हाणं, कीरइ पूआनिमित्तमेएसिं ।
न उ मलविगमनिमित्तं, सम्ममिणं भावियव्वं तु ८७
मलरहितानां स्नानं क्रियते पूजानिमित्तमेतेषाम् ।
न तु मलविगमनिमित्तं सम्यगिदं भावयितव्यं तु ॥८७॥

ता एसो परमत्थो, सहावविमलाण जिणवरचिईणं ।
ण्हाणजलं अन्नोन्नं, लग्गं न हु कुणइ तं दोसं ॥८८॥
तदेष परमार्थः स्वभावविमलानां जिनवरचितीनाम् ।
स्नानजलमन्योन्यं लग्नं न खलु करोति तं दोषम् ॥८८॥

निर्माल्यस्वरूपम्

निम्मल्लं पि न एवं, भन्नइ निम्मल्ललक्खणाऽभावा ।
भोगविणट्ठं दव्वं, निम्मल्लं बिंति गीयत्था ॥ ८९ ॥
निर्माल्यमपि नैवं भण्यते निर्माल्यलक्षणाभावात् ।
भोगविनष्टं द्रव्यं निर्माल्यं ब्रुवन्ति गीतार्थाः ॥ ८९ ॥

एत्तो चिय एगाए, कासाईए जिणेंदपडिमाणं ।
अट्ठसयं लूहंता, विजयाई वन्निआ समए ॥ ९० ॥
इतः खलु एकया काषाय्या जिनेन्द्रप्रतिमानाम् ।
अष्टशतं मृजन्तः विजयादयो वर्णिताः समये ॥ ९० ॥

भत्तिब्भरनिब्भरमाणसेहिं सव्वायरेण कीरंतं ।
सुहफलयं जिणमज्जणमासायणलक्खणाभावा ॥९१॥
भक्तिभरनिर्भरमानसैः सर्वादरेण क्रियमाणम् ।
शुभफलदं जिनमज्जनमाशातनालक्षणाभावात् ॥ ९१ ॥

जइ पडिबिंबनिमित्ता, हुंता आसायणा तओ कीस । आगमे यक्षादिबिम्बम्
जक्खपडिमाइरूवो, परिवारो आगमे सिट्ठो? ॥ ९२ ॥
यदि प्रतिबिम्बनिमित्ता अभविष्यन्नाशातनाः ततः कस्मात् ।
यक्षप्रतिमादिरूपः परिवार आगमे शिष्टः ? ॥ ९२ ॥

कह वा तित्थयरोवरि, कीरइ मालोधराइपरिवारो? । समतद्दीकरणम्
न य सो निन्हवियव्वो, सोहानासाइदोसाओ ॥९३॥
कथं वा तीर्थकरोपरि क्रियते मालाधरादिपरिवारः ? ।
न च स निह्नोतव्यः शोभानाशादिदोषात् ॥ ९३ ॥

जिणजलसंगनिवारणपरियरनीरं कहं तु रक्खेसि? ।
न्हवणे वा तं न कुणसि, करेसि उज्जालणे नियमा ॥९४॥
जिनजलसङ्गनिवारणपरिकरनीरं कथं तु रक्षसि ? ।
स्नपने वा तन्न करोषि करोषि उज्ज्वालने नियमात् ॥९४॥

अह तं न करेसि तुमं, चिइमालिन्नं उवेहमाणस्स ।
महती तओ अवन्ना, तओ वि आसायणा नऽन्ना ॥९५॥
अथ तन्न करोषि त्वं चैत्यमालिन्यमुपेक्षमाणस्य ।
महती ततोऽवज्ञा ततोऽपि आशातना नान्या ॥ ९५ ॥

अन्नं च—
लोयकरणेण पीडं, उप्पायंतो वि सुद्धपरिणामो ।
जह सुद्धमणो समणो, होइ दढं निज्जराभागी ॥९६॥
अन्यच्च—
लोचकरणेन पीडां उत्पादयन्नपि शुद्धपरिणामः ।
यथा शुद्धमनाः श्रमणो भवति दृढं निर्जराभागी ॥ ९६॥

जह वा कुसलो विज्जो, लंघण-कडुगोसहाइदाणेणं ।
विहियारोग्गो पावइ, इच्छियमत्थं च किंचि च ९७॥

---

1. मालधरः प्रतिमाया उपरि रचनाविशेषः ।

यथा वा कुशलो वैद्यो लङ्घन-कटुकौषधादिदानेन ।
विहितारोग्यः प्राप्नोतीच्छितमर्थं च कीर्तिं च ॥ ९७ ॥

एवं सुहभावजुअं, ण्हाणं उज्जालणं च पडिमाणं ।
भत्तीए कीरंतं, कम्मक्खयकारणं चेव ॥ ९८ ॥

एवं शुभभावयुतं स्नानमुज्ज्वालनं च प्रतिमानाम् ।
भक्त्या क्रियमाणं कर्मक्षयकारणं चैव ॥ ९८ ॥

उदाहरणम् आहरणं पुण एत्थं, वीरजिणिंदस्स कन्नसल्लाइं ।
अवणेत्तु सुहं पत्ता, सिद्धत्थवणी-खरयवेज्जा ॥९९ ॥

---

१. तद्यथम्—"ततो भगवान् षण्माणीं नाम ग्रामं गतः, तस्य बहिः प्रतिमां स्थितः, तत्र स्वामिसमीपे गोपो गावौ छर्दयित्वा ग्रामे प्रविष्टः, दोहनानि कृत्वा निर्गतः, तौ च गावौ अटवीं प्रविष्टौ चरितव्यकस्य कार्ये, तदा स आगतः पृच्छति—देवार्यक! कुत्र तौ बलीवर्दौ? भगवान् मौनेन आस्ते, तदा स परिकुपितः भगवतः कर्णयोः कटशलाके क्षिपति, एकाऽनेन कर्णेन, एकाऽनेन, यावद् द्वे अपि मिलिते तदा मूले भग्ने, मा कश्चिद् उत्खनिष्यति इति । केचिद् भणन्ति—एका एव यावद् इतरेण कर्णेन निर्गता तदा भग्ना । कर्णयोः त्रपु तप्तं गोपस्य कृतं त्रिपृष्ठेन राज्ञा । कर्णयोर्वर्धमानस्य तेन क्षिप्ता कटशलाका । भगवतः तद्द्वारा वेदनीयं कर्म उदीर्णम् । ततः स्वामी मध्यमां गतः, तत्र सिद्धार्थो नाम वणिक्, तस्य गृहं भगवान् अतिक्रान्तः-अतिगतः, तस्य च मित्रं खरको नाम वैद्यः, तौ द्वावपि सिद्धार्थस्य गृहे आसाते, स्वामी भिक्षायै प्रविष्टः, वणिग् वन्दते, स्तौति च । वैद्यः तीर्थंकरं दृष्ट्वा भणति—अहो!!! भगवान् सर्वलक्षणसंपूर्णः किं पुनः सशल्यः? ततः स वणिक् संभ्रान्तो भणति—प्रलोकय कुत्र शल्यम्? तेन प्रलोकयता दृष्टं कर्णयोः, तेन वणिजा भण्यते—गमय एतद् महातपस्विनः, पुण्यं भविष्यति इति, तथापि ममाऽपि, भणति निष्प्रतिकर्मा भगवान् नेच्छति, तदा प्रतिचारितो यावद् दृष्ट उद्याने प्रतिमां स्थितः, तौ औषधानि गृहीत्वा गतौ, तत्र भगवान् तैलद्रोण्यां ( तैलपूर्णमञ्जूषायाम् ) निमज्जितः, भ्रक्षितश्च । पश्चाद् बहुभिर्मनुष्यैर्यन्त्रितः, आक्रान्तश्च, पश्चात् संदंशकेन गृहीत्वा कर्षिते, तत्र सरुधिरे शलाके आकृष्टे, तयोश्च आकृष्यमाणयोर्भगवता आरसितम्, तांश्च मनुष्यान् उत्पाट्य उत्थितः, महाभैरवमुद्यानं तत्र जातम्, देवकुलं च, पश्चात् संरोहणमौषधं दत्तम्, येन तदैव प्रगुणः । तदा वन्दित्वा, क्षमयित्वा च गतौ" इति ॥ सिद्धार्थवणिक्—खरकवैद्योदाहरणं श्रीआवश्यके ५२५ गाथायाम्, दृष्टौ च (पृ० २२६—२२७)

आहरणं पुनरत्र वीरजिनेन्द्रस्य कर्णशल्यानि ।
अपनीय सुखं प्राप्तौ सिद्धार्थवणिक्-खरकवैद्यौ ॥९९॥

तह चाहिओ न भयवं, संगमयविमुक्ककालचक्केणं ।
जह जणियभेरवरवं, नीणिज्जंतेसु सल्लेसु ॥ १०० ॥

तथा बाधितो न भगवान् संगमकविमुक्तकालचक्रेण ।
यथा जनितभैरवरवं नीयमानेषु शल्येषु ॥ १०० ॥

तहविहविसुद्धभावा, जाया कल्लाणभायणं दो वि ।
तम्हा भावविसुद्धी, कम्मक्खयकारणं नेया ॥१०१॥ भावविशुद्धिः

तथाविधविशुद्धभावाज्जातौ कल्याणभाजनं द्वावपि ।
तस्माद्भावविशुद्धिः कर्मक्षयकारणं ज्ञेया ॥ १०१ ॥

जो मंदराग-दोसो, परिणामो सुद्धओ तओ होइ ।
मोहम्मि य पबलम्मि, न मंदया हंदि! एएसिं ॥१०२॥

यो मन्दराग-दोषः परिणामः शुद्धकस्ततो भवति ।
मोहे च प्रबले न मन्दता हन्त! एतेषाम् ॥ १०२ ॥

जो मोहकलुसियमणो, कुणइ अदोसे वि दोससंकप्पं ।
सो अप्पाणं वंचइ, पेयावमगो वणिसुउ व्व ॥ १०३॥

यो मोहकलुषितमनाः करोत्यदोषेऽपि दोषसंकल्पम् ।
स आत्मानं वञ्चयते पेयावमको वणिक्सुत इव ॥१०३॥

सुद्धं पि भत्तपाणं, कुणइ असुद्धं असुद्धसंकप्पो ।
संकाकलुसियचित्तो, एसणनिरवेक्खभावो वा ॥१०४॥

---

१. पेयां वमति इति पेयावमकः ।

२. पेयावमकस्य उदाहरणमिदम्—"यः शङ्कां करोति [illegible] विनश्यति, यथा स पेयावमकः, पेयायां माता मे परिवेष्यमानायां क्षिप्ताः, अन्धकारके उपरिष्टात् आगतां तां पुत्रौ पिबतः, एवं चिन्तयति—एता मक्षिकाः, शङ्कया तस्य वल्गुलो समुत्पन्नः, मृतश्च । द्वितीयश्चिन्तयति—न मम माता मक्षिका ददाति, जीवितः" आवश्यके सम्यक्त्वाधिकारे (पृ० ८२४)

शुद्धमपि भक्तपानं करोत्यशुद्धमशुद्धसंकल्पः ।
शङ्काकलुषितचित्त एषणनिरपेक्षभावो वा ॥ १०४ ॥

अवसउणकप्पणाए, सुंदरसउणो असुंदरं फलइ ।
इय सुंदरा वि किरिया, असुहफला मलिणहिययस्स ॥
अपशकुनकल्पनया सुन्दरशकुनमसुन्दरं फलति ।
इति सुन्दराऽपि क्रियाऽशुभफला मलिनहृदयस्य ॥१०५॥

सुत्ताविरुद्धकिरियं, खिसंतो नियययडियजुत्तीहिं ।
पंडियमाणी पुरिसो, कलुसइ भावं बहुजणस्स ॥ १०६
सूत्राविरुद्धक्रियां क्षिपन् निजकघटितयुक्तिभिः ।
पण्डितमानी पुरुषः कलुषयति भावं बहुजनस्य ॥ १०६॥

धम्मत्थी मुद्धजणो, अउव्वभणियम्मि लग्गइ सुहेण ।
फुडमेयं मोहिज्जइ, लोहिल्लो अलियवाईहिं ॥ १०७ ॥
धर्मार्थी मुग्धजनोऽपूर्वभणिते लगति सुखेन (शुभेन ।)
स्फुटमेतन्मोह्यते लोभी अलीकवादिभिः ॥ १०७ ॥

कह नाम भवारन्ने, चिरकालं परियडिस्समेगागी ।
इय मेलइ जणसत्थं, नियए बोहे असग्गाही ॥१०८॥
कथं नाम भवारण्ये चिरकालं पर्यटिष्याम्येकाकी ।
इति मेलयति जनसार्थं निजके बोधेऽसद्ग्राही ॥ १०८ ॥

हानिकरं स्वाच्छन्द्यम्

धम्मत्थिणा हु पढमं, आगमतत्तं मणे धरेयव्वं ।
तत्थ पुण पयडमेयं, भणियं परमत्थपेच्छीहिं ॥१०९॥
धर्मार्थिना खलु प्रथममागमतत्त्वं मनसि धर्तव्यम् ।
तत्र पुनः प्रकटमेतद्भणितं परमार्थप्रेक्षिभिः ॥ १०९ ॥

समइपवित्ती सव्वा, आणाबज्झ त्ति भवफला चेव ।
तित्थयरुद्देसेण वि, न तत्तओ सा तदुद्देसा ॥११०॥

---

१. एषा च गाथा अष्टमे पंचाशके—"समतिपवित्ती सव्वा आणाबज्झ त्ति भवफला चेव । तित्थगरुद्देसेण वि ण तत्तओ सा तदुद्देसा" ॥ १३ ॥

स्वमतिप्रवृत्तिः सर्वा आज्ञाबाह्येति भवफला चैव ।
तीर्थकरोद्देशेनापि न तत्त्वतः सा तदुद्देशा ॥ ११० ॥

कयमेत्थ पसंगेणं, नोवाएयं न या वि मोत्तवं ।
समईएऽणुट्ठाणं, परिणामविसुद्धकामेहिं ॥ १११ ॥

कृतमत्र प्रसङ्गेन नोपादेयं न चापि मोक्तव्यम् ।
स्वमत्याऽनुष्ठानं परिणामविशुद्धकामैः ॥ १११ ॥

पुवपुरिसप्पवन्ने, मज्जणसलिले जिणंदबिंबाणं ।
अन्नोन्नं लग्गंते, कलुसं चित्तं न कायवं ॥ ११२ ॥

पूर्वपुरुषप्रपन्ने मज्जनसलिले जिनेन्द्रबिम्बानाम् ।
अन्योन्यं लगति कलुषं चित्तं न कर्तव्यम् ॥ ११२ ॥

पय-खीरमज्जणाइ वि, वायगगंथेसु पयडमुवइट्ठं । वाचकोपदेशः
पूयंतरायभीया, धम्मियपुरिसा न वारेंति ॥ ११३ ॥

घृत-क्षीरमज्जनाद्यपि वाचकग्रन्थेषु प्रकटमुपदिष्टम् ।
पूजान्तरायभीता धार्मिकपुरुषा न वारयन्ति ॥ ११३ ॥

आह जइ पुवपुरिसा, पमायओ कह वि निवडिया कूवे । परंपराप्रामाण्ये दूषणानि
ता किं संपयपुरिसा, नियमा तत्थेव निवडंतु? ॥ ११४ ॥

आह यदि पूर्वपुरुषाः प्रमादतः कथमपि निपतिताः कूपे ।
तस्मात्किं साम्प्रतपुरुषा नियमात्तत्रैव निपतन्तु? ॥ ११४ ॥

जइ आजम्मदरिद्दा, जचंधा विविहरोगतवियंगा ।
आसि नरा पुरिमिल्ला, ता किं अम्हे वि तह होमो? ११५

यथाजन्मदरिद्रा जात्यन्धा विविधरोगतप्ताङ्गाः ।
आसन्नराः पुराणास्तस्मात्किं वयमपि तथा भवामः? ११५

---

१. वाचकग्रन्थेषु प्रशमरतिप्रकरणादिषु, तथा च—"चैत्यायतनप्रस्थापनानि च कृत्वा शक्तितः प्रयतः । पूजाश्च गन्धमाल्याऽधिवासधूपप्रदीपाद्याः" ॥ ३०५ ॥ प्रशमरतौ ।

जइ ताव जार-चोरा, मंसासी जीवघायगा कूरा ।
अम्ह कुले आसि नरा, अम्ह वि धम्मो न तो जुत्तो ११६
यदि तावज्जार-चौरा मांसाशिनो जीवघातकाः क्रूराः ।
अस्माकं कुले आसन्नरा अस्माकमपि धर्मो न ततो युक्तः॥

आयरिओ—

दूषणप्रतीकारः भद्दा तुमं वायाडो, वाढं वुग्गाहिओ सि केणाऽवि ।
जंपसि जं वा तं वा, तेणेवं मोहगहगहिओ ॥ ११७॥

आचार्यः—

भद्र! त्वं वाचाटो वाढं व्युद्ग्राहितोऽसि केनापि ।
जल्पसि यद्वा तद्वा तेनैवं मोहग्रहगृहीतः ॥ ११७ ॥

अन्नट्ठा दिट्ठंता, न जोइयव्वा वुहेण अन्नत्थ ।
नो खलु चरणाहरणं, रेहइ कन्ने वि संठवियं ॥११८॥
अन्यार्था दृष्टान्ता न योजयितव्या बुधेनान्यत्र ।
नो खलु चरणाभरणं राजति कर्णेऽपि संस्थापितम्॥११८॥

धम्माभिमुहो पुरिसो, न मुयइ जो कुलकमागयं मिच्छं ।
तस्स इमे दिट्ठंता, सिट्ठा दिट्ठंतवेईहिं ॥ ११९ ॥
धर्माभिमुखः पुरुषो न मुञ्चति यः कुलक्रमागतं मिथ्यात्वम् ।
तस्येमे दृष्टान्ताः शिष्टा दृष्टान्तवेदिभिः ॥ ११९ ॥

तुममणवज्जं किरियं, धम्मियजणसंमयं चिराइन्नं ।
दिट्ठंतेहिँ इमेहिं, उज्झसि ता सुट्ठु मूढो सि ॥ १२०॥
त्वमनवद्यां क्रियां धार्मिकजनसम्मतां चिराचीर्णाम् ।
दृष्टान्तैरेभिरुज्झसि तस्मात् सुष्ठु मूढोऽसि ॥ १२० ॥

सूत्रप्रामाण्यम् अह भणसि सुत्तवुत्तं, जुत्तं काउं किमन्नपुरिसेहिं ।
सच्चमिणं सइ सुत्ते, अम्हाण वि संमयं एयं ॥ १२१ ॥
अथ भणति सूत्रोक्तं युक्तं कर्तुं किमन्यपुरुषैः ।
सत्यमिदं सति सूत्रे अस्माकमपि सम्मतमेतत् ॥ १२१ ॥

नवरं पुच्छामि अहं, तं सुत्तं केण विरइयं भणसि? ।
जइ गणहरपमुहेहिं, ते आसि न व त्ति कह मुणसि? ॥१२२॥

नवरं पृच्छामि अहं तत्सूत्रं केन विरचितं भणसि? ।
यदि गणधरप्रमुखैस्ते आसन्न वेति कथं जानासि ? १२२

जइ गुरुपरंपराए, तेसिं वयणम्मि कह णु पत्तियसि? ।
अह सच्चवाइणो ते, कह णु असच्चं तयाइन्नं? ॥ १२३ ॥

यदि गुरुपरम्परया तेषां वचने कथं नु प्रत्येषि ।
अथ सत्यवादिनस्ते कथं नु असत्यं तदाचीर्णम् ?॥१२३॥

एगंतापामन्ने, तेसिं संविग्गगीयपुरिसाणं ।
तित्थे तित्थयरम्मि य, उप्पज्जइ संसओ नियमा ॥१२४॥

एकान्ताप्रामाण्ये तेषां संविग्नगीतपुरुषाणाम् ।
तीर्थे तीर्थकरे च उत्पद्यते संशयो नियमात् ॥ १२४ ॥

जं भणसि सुत्तवुत्तं, पमाणमेयं पि वयणमेत्तं ते ।
जं जीयववहारं, मुचसि तं सुत्तपयडं पि ॥ १२५ ॥

'जीत' व्यवहारस्य सूत्रान्तर्गतता

यद्भणसि सूत्रोक्तं प्रमाणमेतदपि वचनमात्रं ते ।
यज्जीतव्यवहारं मुञ्चसि तत्सूत्रप्रकटमपि ॥ १२५ ॥

गणहर-पुव्वधराईरइयं सुत्तं ति सच्चमेवेयं ।
तं मग्गमणुसरंतं, पमाणमो नवरमन्नं पि ॥ १२६ ॥

गणधर-पूर्वधरादिरचितं सूत्रमिति सत्यमेवैतत् ।
तन्मार्गमनुसरन् प्रमाणं तु नवरमन्यदपि ॥ १२६ ॥

तित्थं पभावयंता, संपइ कइणो वि सुंदरा चेव ।
जम्हा जिणिंदसमए, पभावगा ते पढिज्जंति ॥ १२७॥

तीर्थं प्रभावयन्तः संप्रति कवयोऽपि सुन्दराश्चैव ।
यस्माज्जिनेन्द्रसमये प्रभावकास्ते पठ्यन्ते ॥ १२७ ॥

प्रभावकाः

पावयणी धम्मकही, वाई नेमित्तिओ तवस्सी य ।
विज्जा-सिद्धो य कवी, अट्ठेव पभावगा भणिआ १२८

प्रावचनिको धर्मकथी वादी नैमित्तिकस्तपस्वी च ।
विद्या-सिद्धश्च कविरष्टैव प्रभावका भणिताः ॥ १२८ ॥

सयुक्तिघटितस्याऽपि शोभनता

पवयणपभावणकरं, सजुत्तिरइयं पि सोहणं नेयं ।
रोसा णेंतो रयणं, खारो पि पसंसिओ लोए ॥१२९॥

प्रवचनप्रभावनाकरं स्व(स)युक्तिरचितमपि शोभनं ज्ञेयम् ।
रोषाद् नयन् रत्नं क्षारोऽपि प्रशंसितो लोके ॥ १२९ ॥

श्रुतग्राहप्रतिपक्षः

जो जो अ सुअग्गाहो, पडिवक्खो तस्स तस्स भणियव्वो।
जत्तो वायइ पवणो, परियैत्थी(?) दिज्जए तत्तो॥१३०

यो यश्च श्रुतग्राहः प्रतिपक्षः तस्य तस्य भणितव्यः ।
यतो वाति पवनः द्वारं दीयते ततः ॥ १३० ॥

जमालिः

संघं अवमन्नंतो, जाणगमाणी जणो असग्गाही ।
कहमवि भिन्नं मन्नइ, जमालिपमुहाणमप्पाणं १३१

संघमवमन्यमानो ज्ञायकमानी जनोऽसद्ग्राही ।
कथमपि भिन्नं मन्यते जमालिप्रमुखेभ्य आत्मानम् १३१

संघापमानदूषणम्

संसिज्जइ नियकिरिया, दूसिज्जइ सयलसंघववहारो ।
कत्तो एत्तो वि परा, विमाणणा हंदि!संघस्स? ॥१३२॥

शस्यते निजक्रिया दूष्यते सकलसंघव्यवहारः ।
कुत इतोऽपि परा विमानना हन्त! सघस्य ? ॥ १३२ ॥

---

१. इयं गाथा अग्रेऽपि ९०८ तमी । २. क्षारोऽपि समुद्रो रोषाद् रत्नं नयन् लोके प्रशस्यते, इति तत्त्वमनुमीयते । ३. अयं शब्दो देश्यप्राकृतगतो द्वारवाची, गवाक्षवाची वा अवगम्यते । ४. जमालिः किल श्रीवीरजिनजामाता वीरवाक्यप्रतिपन्थी च, तच्चरितं च श्रीआवश्यकसूत्रे निन्हवप्रकरणे ( पृ० ३१२–३१३ ) तथा विशेषावश्यकग्रन्थे गाथा २३०६–२३३२ तथा पञ्चमाङ्गे श्रीभगवतीसूत्रे च नवमे शतके त्रयस्त्रिंशोद्देशके ।

जो जिणसंघं हीलइ, संघावयवस्स दुक्कयं दट्ठुं ।
सवजणहीलणिज्जो, भवे भवे होइ सो जीवो ॥ १३३ ॥

यो जिनसङ्घं हेलति सङ्घावयवस्य दुष्कृतं दृष्ट्वा ।
सर्वजनहेलनीयो भवे भवे भवति स जीवः ॥ १३३ ॥

जइ कम्मवसा केई, असुहं सेवंति किमिह संघस्स? ।
विट्टालिज्जइ गंगा, कयाइ किं वासवारेहिं ? ॥१३४॥

यदि कर्मवशात्केऽपि अशुभं सेवन्ते किमिह सङ्घस्य ? ।
विटाल्यते गङ्गा कदापि किं वासवारैः ? ॥ १३४ ॥

जो पुण संतासंते, दोसे गोवेइ समणसंघस्स ।
विमलजसकित्तिकलिओ, सो पावइ निवुइं तुरियं१३५

यः पुनः सतोऽसतो दोषान् गोपायति श्रमणसङ्घस्य ।
विमलयशःकीर्तिकलितः स प्राप्नोति निर्वृतिं त्वरितम् ॥

जह कणरक्खणहेउं, रक्खिज्जइ जत्तओ पलालं पि ।
सासणमालिन्नभया, तहा कुसीलं पि गोवेज्जा॥१३६॥

यथा कणरक्षणहेतुं रक्ष्यते यत्नतः पलालमपि ।
शासनमालिन्यभयात्तथा कुशीलमपि गोपायेत् ॥ १३६ ॥

भणियस्स तत्तमेयं, संघस्सासायणा न कायवा ।
सोउं सगरसुआणं, दुविसहं दुक्खरिंछोलिं ॥ १३७॥

भणितस्य तत्त्वमेतत्सङ्घस्याशातना न कर्तव्या ।
श्रुत्वा सगरसुतानां दुर्विषहां दुःखपङ्क्तिम् ॥ १३७ ॥

अन्नो भणेज्ज कोई, ओसरणठियस्स वीयरागस्स । कस्यचिद्
इंदाइएहिं न कया, मज्जण-मल्लाइणा पूआ ॥ १३८ ॥ मतम्

अन्यो भणेत्कोऽपि समवसरणस्थितस्य वीतरागस्य ।
इन्द्रादिकैर्न कृता मज्जन-माल्यादिना पूजा ॥ १३८ ॥

जिणपडिछंदो पडिमा, संपइ तासिं पि सा न खलु जुत्ता
रागाइसयपगासणमसंगयं वीयरागस्स ॥ १३९ ॥

जिनप्रतिच्छन्दः प्रतिमा सम्प्रति तासामपि सा न खलु युक्ता ।
रागातिशयप्रकाशनमसंगतं वीतरागस्य ॥ १३९ ॥

प्रतिवचः

भणइ गुरू मुत्ताणं, रागो आरोविओ वि नारुहइ ।
न हि निद्दड्ढे वीए, होइ पुणो अंकुरुप्पत्ती ॥ १४० ॥

भणति गुरुर्मुक्तानां राग आरोपितोऽपि नाऽऽरोहति ।
न हि निर्दग्धे बीजे भवति पुनरङ्कुरोत्पत्तिः ॥ १४० ॥

पूआइदंसणाओ, रागित्तपकप्पणा न धन्नाणं ।
जायइ भावुल्लासो, कल्लाणपरंपरामूलं ॥ १४१ ॥

पूजादिदर्शनाद्रागित्वप्रकल्पना न धन्यानाम् ।
जायते भावोल्लासः कल्याणपरम्परामूलम् ॥ १४१ ॥

बिम्बपूजाहेतुः

जिणभवणबिंबपूआ, कीरंति जिणाण नो कए किंतु ।
सुहभावणानिमित्तं, बुहाण इयराण बोहत्थं ॥ १४२ ॥

जिनभवनबिम्बपूजा क्रियते जिनानां नो कृते किन्तु ।
शुभभावनानिमित्तं बुधानां इतरेषां बोधार्थम् ॥ १४२ ॥

भणियं च—

चेईहरेण केई, पसंतरूवेण केई बिंबेण ।
पूआइसया अन्ने, बुज्झंति तहोवएसेण ॥ १४३ ॥

भणितं च—

चैत्यगृहेण केऽपि प्रशान्तरूपेण केऽपि बिम्बेन ।
पूजातिशयादन्ये बुध्यन्ते तथोपदेशेन ॥ १४३ ॥

ता पुप्फ-गंध-भूसण-विचित्तवत्थेहिँ पूयणं निच्चं ।
जह रेहइ तह सम्मं, कायव्वं सुद्धचित्तेहिं ॥ १४४ ॥

तत्पुष्प-गन्ध-भूषण-विचित्रवस्त्रैः पूजनं नित्यम्।
यथा राजते तथा सम्यक् कर्तव्यं शुद्धचित्तैः ॥ १४४ ॥

अन्ने बेंति अजुत्तं, पुणरुत्तं[1] वत्थ-भूसणाईणं। अन्यमतम्
आरोवणं जिणाणं, उज्झियनिम्मल्लपायाणं ॥ १४५ ॥
अन्ये ब्रुवतेऽयुक्तं पुनरुक्तं वस्त्र-भूषणादीनाम्।
आरोपणं जिनानामुज्झितनिर्माल्यप्रायाणाम् ॥ १४५ ॥

पडिवुत्तं चेव इमं, पुव्वं निम्मल्ललक्खणाभावा। प्रतिवचः
भोगविणट्ठं दव्वं, निम्मल्लं बजरंतेण ॥ १४६ ॥
प्रत्युक्तं चैवेदं पूर्वं निर्माल्यलक्षणाभावात्।
भोगविनष्टं द्रव्यं निर्माल्यं कथयता ॥ १४६ ॥

अलमेत्थ वित्थरेणं, आइन्नं एवमाइ बहुभेअं।
सव्वं न दूसिअव्वं, विसुद्धधम्मं महंतेण ॥ १४७ ॥
अलमत्र विस्तरेण आचीर्णमेवमादि बहुभेदम्।
सर्वं न दूषयितव्यं विशुद्धधर्मं काङ्क्षता ॥ १४७ ॥

आह परो जिणवंदणविहाणमारंभिऊण किं जुत्तं?। चैत्यवन्दनाप्रकरणे आचरणाचर्चायां हेतुः
अप्पत्थुयमाढविअं, आइन्नवियारणं एयं ॥ १४८ ॥
आह परो जिनवन्दनविधानमारभ्य किं युक्तम्?।
अप्रस्तुतमारब्धमाचीर्णविचारणमेतत् ॥ १४८ ॥

नापत्थुयमेत्थ जओ, एयं चिय अंतरंगमुवइट्ठं।
भावविसुद्धिसरूवं, पढमं ता वंदणविहाणं ॥ १४९ ॥
नाप्रस्तुतमत्र यत एतत्खलु अन्तरङ्गमुपदिष्टम्।
भावविशुद्धिस्वरूपं प्रथमं ततो वन्दनविधानम् ॥ १४९ ॥

कुग्गाहदूसियमणो, समुज्जमंतो वि बज्झकिच्चेसु।
विहिवंदणाणुरूवं, फलं न पावेइ दुब्बुद्धी ॥ १५० ॥

---

1. "पुणरुत्तं कृतकरणे" ८-२-११९ इति सिद्धहेमसूत्रप्रामाण्याद् अव्ययमेतत्।

कुग्राहदूषितमनाः समुपयच्छन्नपि बाह्यकृत्येषु ।
विधिवन्दनानुरूपं फलं न प्राप्नोति दुर्बुद्धिः ॥ १५० ॥

कोटरजलंतजलणो, आसिचंतो वि वारिधाराहिं ।
विड्ढि तरू न पावइ, किलिट्ठचित्तस्स तह धम्मो १५१

कोटरज्वलज्ज्वलन आसिच्यमानोऽपि वारिधाराभिः ।
वृद्धिं तरुर्न प्राप्नोति क्लिष्टचित्तस्य तथा धर्मः ॥ १५१ ॥

तम्हा कुग्गाहविसं, वमित्तु पसमामयं च पाऊणं ।
मज्झत्थमणो मइमं, करेज्ज चिइवंदणं विहिणा १५२

*तस्मात्कुग्राहविषं वमित्वा प्रशमामृतं च पीत्वा ।*
मध्यस्थमना मतिमान् कुर्याच्चैत्यवन्दनां विधिना ॥१५२॥

चैत्यवन्दना-प्रकाराः

चिइवंदणा तिभेया, जहन्न उकोस मज्झिमा चेव ।
एकेका वि तिभेया, जेट्ठ विजेट्ठा कणिट्ठा य॥१५३॥

चैत्यवन्दना त्रिभेदा जघन्या उत्कृष्टा मध्यमैव ।
एकैकाऽपि त्रिभेदा ज्येष्ठा विज्येष्ठा कनिष्ठा च ॥ १५३ ॥

कनिष्ठजघन्य० विज्येष्ठजघन्य०

एगनमोक्कारेणं, होइ कणिट्ठा जहन्निआ एसा ।
जहसत्तिनमोकारा, जहन्निया भन्नइ विजेट्ठा॥१५४॥

एकनमस्कारेण भवति कनिष्ठा जघन्यका एषा ।
यथाशक्तिनमस्कारा जघन्यका भण्यते विज्येष्ठा ॥ १५४॥

ज्येष्ठजघन्य० कनिष्ठमध्य०

स च्चिय सक्कथयंता, नेया जिट्ठा जहन्नियासन्ना ।
स च्चिय इरिआवहिआसहिआ सक्कथयदंडेहिं १५५॥

सा खलु शक्रस्तवान्ता ज्ञेया ज्येष्ठा जघन्यकासंज्ञा ।
सैवेर्यापथिकीसहिता शक्रस्तवदण्डैः ॥ १५५ ॥

विज्येष्ठमध्य०

मज्झिमकणिट्ठिगेसा, मज्झिम[वि]जेट्ठा उ होइ सा चेव ।
चेइयदंडयथुइएगसंगया सव्वमज्झिमया ॥ १५६ ॥

मध्यमकनिष्ठिकैषा मध्यम[वि]ज्येष्ठा तु भवति सा चैव ।
चैत्यदण्डकस्तुत्येकसंगता सर्वमध्यमिका ॥ १५६ ॥

मज्झिमजेट्ठा स च्चिय, तिन्नि थुईओ सिलोयतियजुत्ता । ज्येष्ठमध्यमा०
उक्कोसकणिट्ठा पुण, स च्चिय सक्कत्थयाइजुया १५७ कनिष्ठोत्कृष्टा०
मध्यमज्येष्ठा सा खलु तिस्रः स्तुतयः श्लोकत्रिकयुक्ता ।
उत्कृष्टकनिष्ठा पुनः सैव शक्रस्तवादियुता ॥ १५७ ॥

थुइजुयलजुयलएणं, दुगुणियचेइयथयाइदंडा जा । विज्येष्ठोत्कृष्टा-
सा उक्कोसविजेट्ठा, निद्दिट्ठा पुव्वसूरीहिँ ॥ १५८ ॥ स्वरूपम्
स्तुतियुगलयुगलकेन द्विगुणितचैत्यस्तवादिदण्डा या ।
सा उत्कृष्टविज्येष्ठा निर्दिष्टा पूर्वसूरिभिः ॥ १५८ ॥

थोत्तपणिवायदंडगपणिहाणतिगेण संजुआ एसा । ज्येष्ठोत्कृष्टास्व-
संपुन्ना विन्नेया, जेट्ठा उक्कोसिआ नाम ॥ १५९ ॥ रूपम्
स्तोत्रप्रणिपातदण्डकप्रणिधानत्रिकेण संयुता एषा ।
संपूर्णा विज्ञेया ज्येष्ठा उत्कृष्टिका नाम ॥ १५९ ॥

एसा नवप्पयारा, आइन्ना वंदणा जिणमयम्मि । वन्दनायाः
कालोचियकारीणं, अणग्गहाणं सुहा सव्वा ॥ १६० ॥ कर्तव्यता
एषा नवप्रकारा आचीर्णा वन्दना जिनमते ।
कालोचितकारिणामनाग्रहाणां शुभा सर्वा ॥ १६० ॥

उक्कोसा तिविहा वि हु, कायव्वा सत्तिओ उभयकालं । त्रिविधोत्कृष्टा-
सड्ढेहिँ [illegible] सविसेसं, जम्हा तेसिं इमं सुत्तं ॥१६१॥ याः श्राद्धानां सविशेषकर्त-
उत्कृष्टा त्रिविधाऽपि खलु कर्तव्या शक्तित उभयकालम् । व्यत्वम्
श्राद्धैस्तु सविशेषं यस्मात्तेषामिदं सूत्रम् ॥ १६१ ॥

वंदइ उभओकालं, पि चेइयाइं थय-थुईपरमो । तत्प्रामाण्यम्
जिणवरपडिमागर-धूव-पुप्फ-गंधच्चणुज्जुत्तो ॥ १६२ ॥
वन्दते उभयकालमपि चैत्यानि स्तव-स्तुतिपरमः ।
जिनवरप्रतिमा अगर-धूप-पुष्प-गन्धार्चनोद्युक्तः ॥१६२॥

शेषाणां साधु-श्राद्धकर्तव्यता

सेसा पुण छब्भेया, कायवा देसकालमासज्ज ।
समणेहिँ सावएहिं, चेइयपरिवाडिमाईसु ॥ १६३ ॥

शेषा पुनः षड्भेदा कर्तव्या देशकालमासाद्य ।
श्रमणैः श्रावकैः चैत्यपरिपाट्यादिषु ॥ १६३ ॥

भणियं च—

कल्पभाष्यम्

निस्सकडमनिस्सकडे, वा वि चेइए सबहिं थुई तिन्नि ।
वेलं व चेइयाणि वि, नाउं एकेकिया वा वि॥१६४॥

भणितं च—

निश्राकृतेऽनिश्राकृते वाऽपि चैत्ये सर्वत्र स्तुतयस्तिस्रः ।
वेलां वा चैत्यानि वा ज्ञात्वा एकैकिका वापि ॥ १६४ ॥

श्रीहारिभद्रं वन्दनपञ्चाशकम्

एएसिं भेयाणं, उवलक्खणमेव वन्निया तिविहा ।
हरिभद्दसूरिणा वि हु, वंदणपंचासए एवं॥१६५॥

एतेषां भेदानां उपलक्षणमेव वर्णिता त्रिविधा ।
हरिभद्रसूरिणाऽपि खलु वन्दनपञ्चाशके एवम् ॥

नवकारेण जहन्ना, दंडयथुइजुयल मज्झिमा नेया ।
संपुन्ना उक्कोसा, विहिणा खलु वंदणा तिविहा ॥१६६॥

नमस्कारेण जघन्या दण्डकस्तुतियुगला मध्यमा ज्ञेया ।
संपूर्णा उत्कृष्टा विधिना खलु वन्दना त्रिविधा ॥ १६६॥

वन्दनाया जघन्यादिभेदाः

नवकारेण जहन्ना, जहन्नयजहन्निया इमाऽऽम्नाया ।
दंडयएगथुईए, विन्नेया मज्झमज्झमिया ॥ १६७ ॥

---

१. इयं गाथा कल्पभाष्यगता इति निम्नात् संवादाद् ज्ञायते—"एतच व्याख्यानमिमां कल्पगाथामुपजीव्य कुर्वन्ति, तद्यथा—निस्सकडमनिस्सकडे या वि चेइए सव्वहिं थुई तिन्नि । वेलं व चेइयाणि व नाउं एक्किक्किया वा वि" ॥—तृतीयपञ्चाशकगतद्वितीयगाथाटीकायां श्रीअभयदेवपादाः । २. इयं गाथा श्रीहारिभद्रीयतृतीयवन्दनपञ्चाशके द्वितीया—पञ्चाशके (पृ० ५१) ।

नमस्कारेण जघन्या जघन्यकजघन्यिका इयमाख्याता ।
दण्डकैकस्तुत्या विज्ञेया मध्यमध्यमिका ॥ १६७ ॥

संपुन्ना उक्कोसा, उक्कोसुक्कोसिया इमा सिट्ठा ।
उवलक्खणं खु एयं, दोण्हं दोण्हं सजाईए ॥ १६८ ॥
संपूर्णा उत्कृष्टा उत्कृष्टोत्कृष्टिका इयं शिष्टा ।
उपलक्षणं खल्वेतद्द्वयोर्द्वयोः सजात्योः ॥ १६८ ॥

अन्ने भणंति—

पणिवायदंडगेणं, एगेण जहन्नवंदणा नेया । अन्यमतम्
तद्दुगतिगेण मज्झा, उक्कोसा चउहिँ पंचहिँ वा॥१६९॥

अन्ये भणन्ति—

प्रणिपातदण्डकेन एकेन जघन्यवन्दना ज्ञेया ।
तद्विकत्रिकेण मध्या उत्कृष्टा चतुर्भिः पञ्चभिर्वा ॥१६९॥

हत्थसयाओ मज्झे, इरियावहियाअभावओ दुन्नि ।
एवं उक्कोसाए, चउरो पंच व मुणेयव्वा ॥ १७० ॥

हस्तशतान्मध्ये ईर्यापथिक्यभावतो द्वे ।
एवं उत्कृष्टायां चत्वारः पञ्च वा ज्ञातव्याः ॥ १७० ॥

भणिऊण नमुक्कारे, सक्कत्थयदंडयं अ पढिऊणं ।
इरियं पडिक्कमंते, दो चउरो वा वि पणिवाया॥१७१॥
भणित्वा नमस्कारान् शक्रस्तवदण्डकं च पठित्वा ।
ईर्यां प्रतिक्राम्यन् द्वौ चत्वारो वापि प्रणिपाताः ॥१७१॥

एयं पि जुत्तिजुत्तं, आइन्नं जेण दीसए बहुसो ।
नवरं नवभेयाणं, नेयं उवलक्खणं तं पि ॥ १७२ ॥
एतदपि युक्तियुक्तं आचीर्णं येन दृश्यते बहुशः ।
नवरं नवभेदानां ज्ञेयं उपलक्षणं तदपि ॥ १७२ ॥

पाढकिरियाणुसारा, भणिया चिइवंदणा इमा नवहा ।
अहिगारिविसेसा पुण, तिविहा सवा वि जं भणियं१७३

पाठक्रियानुसाराद् भणिता चैत्यवन्दनेयं नवधा ।
अधिकारिविशेषात्पुनः त्रिविधा सर्वाऽपि यद् भणितम् ॥

पञ्चाशकसाक्ष्यम्

अहवा वि भावभेया, ओहेणं अपुणबंधगाईणं ।
सवा वि तिहा नेया, सेसाणमिमी न जं समए१७४

अथवाऽपि भावभेदादोघेन अपुनर्बन्धकादीनाम् ।
सर्वाऽपि त्रिधा ज्ञेया शेषाणामियं न यत्समये ॥ १७४॥

अपुनर्बन्धकस्वरूपम्

मिच्छत्तुक्कोसठिइं, न बंधिही अपुणबंधगो तेण ।
समयकुसलेहिं सो पुण, इमेहिं लिंगेहिं नायवो॥१७५

मिथ्यात्वोत्कृष्टस्थितिं न भन्त्स्यति अपुनर्बन्धकः तेन ।
समयकुशलैः स पुनः एभिर्लिङ्गैर्ज्ञातव्यः ॥ १७५ ॥

पञ्चाशकसाक्ष्यम्

पावं न तिवभावा, कुणइ न बहु मन्नए भवं घोरं ।
उचियट्ठिइं च सेवइ, सवत्थ वि अपुणबंधो त्ति १७६

पापं न तीव्रभावात् करोति न बहु मन्यते भवं घोरम् ।
उचितस्थितिं च सेवते सर्वत्रापि अपुनर्बन्ध इति ॥१७६॥

तत्तत्थे रोयंतो, सम्मद्दिट्ठी असग्गहविमुक्को ।
देसे-यरविरइजुओ, चारित्ती तुलियसामत्थो ॥१७७॥

तत्त्वार्थान् रोचयन् सम्यग्दृष्टिरसद्ग्रहविमुक्तः ।
देशे-तरविरतियुतश्चारित्री तुलितसामर्थ्यः ॥ १७७ ॥

अधिकारिविधेयम्

अहिगारीणमिमेसिं, विधेया वंदणा तिहा कमसो ।
हीणा मज्झु-क्कोसा, सेसाणहिगारिणो चेव ॥ १७८ ॥

अधिकारिणामेषां विधेया वन्दना त्रिधा क्रमशः ।
हीना-मध्यो-त्कृष्टाः शेषा अनधिकारिणश्चैव ॥ १७८ ॥

---

१. इयं गाथा श्रीयाकिनीमहत्तरासूनुकृते तृतीये वन्दनपञ्चाशके तृतीया—पञ्चाशके (पृ० ५४)। २. इयं गाथाऽपि तत्रैव चतुर्थी—पञ्चाशके (पृ० ५४)।

चिइवंदणासरूवं, भणियं वोच्छं विहाणमेत्ताहे ।
तं पुण संपुन्नाए, संपुन्नं होइ एवं तु ॥ १७९ ॥

चैत्यवन्दनास्वरूपं भणितं वक्ष्ये विधानमिदानीम् ।
तत्पुनः संपूर्णायाः संपूर्णं भवत्येवं तु ॥ १७९ ॥

तिन्नि निसीही तिन्नि य, पयाहिणा तिन्नि चेव य पणामा। दश त्रिकाणि
तिविहा पूआ य तहा, अवत्थतियभावणं चेव ॥ १८० ॥

तिस्रो नैषेधिक्यः तिस्रश्च प्रदक्षिणाः त्रय एव च प्रणामाः।
त्रिविधा पूजा च तथा अवस्थात्रिकभावनं चैव ॥१८०॥

तिदिसिनिरक्खणविरई, पयभूमिपमज्जणं च तिक्खुत्तो।
वन्नाइतियं मुद्दातियं च तिविहं च पणिहाणं॥१८१॥

त्रिदिग्निरीक्षणविरतिः पदभूमिप्रमार्जनं च त्रिकृत्वः ।
वर्णादित्रिकं मुद्रात्रिकं च त्रिविधं च प्रणिधानम् ॥१८१॥

एयासिं गाहाणं, आयरियपरंपरेण पत्ताणं । पारम्पर्यम्
भावत्थो साहिज्जइ, सुहावबोहाहिँ गाहाहिँ ॥१८२॥

एतासां गाथानां आचार्यपरम्परया प्राप्तानाम् ।
भावार्थः कथ्यते सुखावबोधाभिर्गाथाभिः ॥ १८२ ॥

इड्ढीपत्तो सड्ढो, मज्जण-भूसणसमुज्जलसरीरो । इन्यधाद्धम-न्दिरगमन-विधिः
सयलपरियारकलिओ, विहवोचियवाहणारूढो १८३

ऋद्धिप्राप्तः श्राद्धो मज्जन-भूषणसमुज्ज्वलशरीरः ।
सकलपरिवारकलितो विभवोचितवाहनारूढः ॥ १८३ ॥

गंधव्वगीय-वाइयकल-काहलरोलमुहलियदियंतो ।
तिस्थुन्नइं कुणंतो, वच्चइ जिणमंदिरदुवारं ॥ १८४ ॥

---

१. एतद् गाथाद्वयं (१८०—१८१ गाथा) तृतीये पञ्चाशके दशमीगाथा-टीकायां 'तवेदम्' इत्युद्दिश्य निर्दिष्टत्वात् श्रीअभयदेवसूरिः—पञ्चाशके (पृ० ५६)
२. अथेनन गाथाद्वयं (१८०-१८१ गाथा) श्रीहरिभद्रतोऽपि प्राचीनमवसीयते, "एयासिं गाहाणं आयरिय-परंपरेण पत्ताणं" इति ग्रन्थकारवचनात् ।

गन्धर्वगीत-वादित्रकल-काहलकोलाहलमुखरितदिगन्तः ।
तीर्थोन्नतिं कुर्वन् व्रजति जिनमन्दिरद्वारम् ॥ १८४ ॥

पद्माभिगमाः

जिणदिट्ठिगोयरगओ, ससंभमं वाहणा समोयरइ ।
मुंचइ य वाहणाई, राया उण रायककुहाइं ॥ १८५ ॥
जिनदृष्टिगोचरगतः ससंभ्रमं वाहनात्समवतरति ।
मुञ्चति च वाहनादि राजा पुना राजककुधानि ॥ १८५ ॥

तंबोलं कुसुमाइं, वोसिरइ करेइ उत्तरासंगं ।
तो अहिगयगाहाए, अत्थो अवयरइ एत्ताहे ॥ १८६ ॥
ताम्बूलं कुसुमानि व्युत्सृजति करोति उत्तरासङ्गम् ।
ततोऽधिगतगाथाया अर्थोऽवतरतीदानीम् ॥ १८६ ॥

वच्चइ दुवारनियडं, काऊण य पाणिसंपुडं सीसे ।
अद्धावणयपणामं, करेइ रोमंचियसरीरो ॥ १८७ ॥
व्रजति द्वारनिकटं कृत्वा च पाणिसंपुटं शीर्षे ।
अर्द्धावनतप्रणामं करोति रोमाञ्चितशरीरः ॥ १८७ ॥

नैषेधिकीत्रिककरणम्

पविसंतो चेव वलाणयम्मि कुज्जा निसीहिया तिन्नि ।
घरवावारं सव्वं, इन्हि न काहामि भावेंतो ॥ १८८ ॥
प्रविशन्नेव वलानके कुर्यान्नैषेधिकीः तिस्रः ।
गृहव्यापारं सर्वं इदानीं न करिष्यामि भावयन् ॥ १८८ ॥

अद्धावणयपणामं, तत्तो काऊण भुवणनाहस्स ।
पंचंगं वा काउं, भत्तिब्भरनिब्भरमणेणं ॥ १८९ ॥
अर्द्धावनतप्रणामं ततः कृत्वा भुवननाथस्य ।
पञ्चाङ्गं वा कृत्वा भक्तिभरनिर्भरमनसा ॥ १८९ ॥

पूयंगपाणिपरिवारपरिगओ गहिरमहुरघोसेण ।
पढमाणो जिणगुणगणनिबद्धमंगल्ल वित्ताइं ॥ १९० ॥
पूजाङ्गपाणिपरिवारपरिगतो गभीरमधुरघोषेण ।
पठन् जिनगुणगणनिबद्धमङ्गल्यानि वृत्तानि ॥ १९० ॥

करधरियजोगमुद्दो, पए पए पाणिरक्खणाउत्तो ।
देज्जा पयाहिणतिगं, एगग्गमणो जिणगुणेसु॥१९१॥ प्रदक्षिणात्रिककरणम्

करधृतयोगमुद्रः पदे पदे प्राणिरक्षणायुक्तः ।
दद्यात् प्रदक्षिणात्रिकं एकाग्रमना जिनगुणेषु ॥ १९१ ॥

गिहिचेइएसु न घडइ, इयरेसु वि जइ वि कारणवसेणं ।
तह वि न मुंचइ मइमं, सया वि तक्करणपरिणामं॥१९२॥

गृहचैत्येषु न घटते इतरेष्वपि यद्यपि कारणवशेन ।
तथापि न मुञ्चति मतिमान् सदाऽपि तत्करणपरिणामम्॥१९२

तत्तो निसीहियाए, पविसित्ता मंडवम्मि जिणपुरओ ।
महिनिहियजाणुपाणी, करेइ विहिणा पणामतियं॥१९३॥ नैषेधिकीपूर्वकः प्रवेशः, प्रणामत्रिकं च

ततो नैषेधिकया प्रविश्य मण्डपे जिनपुरतः ।
महिनिहितजानुपाणिः करोति विधिना प्रणामत्रिकम् १९३

तयणु हरिसुल्लसंतो, कयमुहकोसो जिणिंदपडिमाणं । निर्माल्योत्तारणम्
अवणेइ रयणिवसियं, निम्मल्लं लोमहत्थेणं ॥ १९४ ॥

तदनु हर्षोल्लसन् कृतमुखकोशो जिनेन्द्रप्रतिमानाम् ।
अपनयति रजनी-उपितं निर्माल्यं रोमहस्तेन ॥ १९४॥

जिणगिहपमज्जणं तो, करेइ कारेइ वा वि अन्नेण । स्वयम्, अन्येन वा जिनगृहप्रमार्जनम्
जिणबिंबाणं पूअं, करेइ तत्तो जहाजोगं ॥ १९५ ॥

जिनगृहप्रमार्जनं ततः करोति कारयति वाऽप्यन्येन ।
जिनबिम्बानां पूजां करोति ततो यथायोगम् ॥ १९५ ॥

अह पुव्वं चिय केणइ, हवेज्ज पूया कया सुविभवेण । सुविभवकृताभ्यपूजायाः विशेषशोभाकृतिः
तं पि सविसेससोहं, जह होइ तहा तहा कुज्जा ॥१९६॥

अथ पूर्वमेव केनापि भवेत्पूजा कृता सुविभवेन ।
तामपि सविशेषशोभां यथा भवति तथा तथा कुर्यात्॥१९६

उचियत्तं पूआए, विसेसकरणं तु मूलबिंबस्स । मूलबिम्बपूजाधिक्यम्
जं पडइ तत्थ पढमं, जणस्स दिट्ठी सह मणेण १९७

उचितत्वं पूजाया विशेषकरणं तु मूलबिम्बस्य ।
यत्पतति तत्र प्रथमं जनस्य दृष्टिः सह मनसा ॥ १९७॥

पूजाप्रयोजनम् कयकिच्चाण जिणाणं, पूआ भवियाण भावजणणत्थं।
सो पुण होइ विसिट्ठे, पलोइए मूलबिंबम्मि ॥१९८॥
कृतकृत्यानां जिनानां पूजा भव्यानां भावजननार्थम् ।
स पुनर्भवति विशिष्टे प्रलोकिते मूलबिम्बे ॥ १९८ ॥

पूजात्रैविध्यम् अंगम्मि पढमपूया, आमिसपूआ तओ भवे बीया ।
तइया थुइ-थोत्तगया, तासि सरूवं इमं होइ ॥१९९॥
अङ्गे प्रथमपूजा आमिषपूजा ततो भवेद्द्वितीया ।
तृतीया स्तुति-स्तोत्रकगता तासां स्वरूपमिदं भवति १९९

अङ्गपूजा वत्था-ऽऽहरण-विलेवणसुगंधिगंधेहिं धूव-पुप्फेहिं ।
कीरइ जिणंगपूआ, तत्थ विही एस नायव्वो ॥२००॥
वस्त्रा-ऽऽभरण-विलेपनसुगन्धिगन्धैर्धूप-पुष्पैः ।
क्रियते जिनाङ्गपूजा तत्र विधिरेष ज्ञातव्यः ॥ २०० ॥

पूजाविधिः वत्थेण बंधिऊणं, नासं अहवा जहा समाहीए ।
वज्जेयव्वं ति तया, देहम्मि वि कंडुयणमाई ॥ २०१ ॥
वस्त्रेण बन्धयित्वा नासामथवा यथा समाधिना ।
वर्जयितव्यमिति तदा देहेऽपि कण्डूयनादि ॥ २०१ ॥

घय दुद्ध-दहिय-गंधोदयाइण्हाणं पभावणाजणगं ।
सइ गीइ-वाइयाईसंजोगे कुणइ पव्वेसु ॥ २०२ ॥
घृत-दुग्ध-दधि-गन्धोदकादिस्नानं प्रभावनाजनकम् ।
स(दा)वि गीत-वादित्रादिसंयोगे करोति पर्वसु ॥ २०२ ॥

एमाइ अंगपूया, कायव्वा नियमओ ससत्तीए ।
सामत्थाभावम्मि उ, धरेज्ज तक्करणपरिणामं ॥२०३॥

---

१. इयं गाथा चतुर्थपञ्चाशके जिनपूजा-पञ्चाशके (पृ० ७७) ।

एवमाद्यङ्गपूजा कर्तव्या नियमतः स्वशक्त्या।
सामर्थ्याभावे तु धारयेत् तत्करणपरिणामम् ॥ २०३ ॥

जो पंचवन्नसत्थिय-बहुविहफल-भक्ख-दीवदाणाई। आमिषपूजा
उवहारो जिणपुरओ, कीरइ सा आमिससवज्जा २०४
यः पञ्चवर्णस्वस्तिक-बहुविधफल-भक्ष्य-दीपदानादिः।
उपहारो जिनपुरतः क्रियते साऽऽमिषसपर्या ॥ २०४ ॥

गंधव्वनट्ट वाइय-लवणजला-ऽऽरत्तियाइ जं किंचं।
आमिसपूयाए च्चिय, सव्वं पि तयं समोयरइ॥ २०५॥
गन्धर्वनाट्य-वादित्र-लवणजला-ऽऽरात्रिकादि यत्कृत्यम्।
आमिषपूजायामेव सर्वमपि तत्समवतरति ॥ २०५ ॥

पूयादुगं पि एयं, उचियं न हु साहु-साहुणिजणस्स।
सावयजणस्स नियमा, उचियं सामग्गिसब्भावे ॥२०६॥
पूजाद्विकमप्येतदुचितं न खलु साधु-साध्वीजनस्य।
श्रावकजनस्य नियमादुचितं सामग्रीसद्भावे ॥ २०६ ॥

थुइपूआ विन्नेया, वंदणकरणोचियम्मि देसम्मि। स्तुतिपूजा
ठाऊण जिणाभिमुहं, पढणं जहसत्ति वित्ताणं[1] ॥२०७
स्तुतिपूजा विज्ञेया वन्दनकरणोचिते देशे।
स्थित्वा जिनाभिमुखं पठनं यथाशक्ति वृत्तानाम् ॥२०७॥

अन्ना वि तिहा पूया, भणिया सत्थंतरेसु सड्ढाणं। पूर्वसूरयः
पूयासोलसए[2] जं, भणियमिणं पुव्वसूरीहिं २०८
अन्याऽपि त्रिधा पूजा भणिता शास्त्रान्तरेषु श्राद्धानाम्।
पूजाषोडशके यद्भणितमिदं पूर्वसूरिभिः ॥ २०८॥

---

१. वृत्तानां छन्दसाम्। २. श्रीहरिभद्रसूरिप्रणीते षोडशकप्रकरणे इदं पूजाषोडशकं नवमम्, यदत्र भाषितवेनोद्लेखि।

पूजाया त्रिप्रकारता

पंचोवयारजुत्ता, पूया अट्ठोवयारकलिया य ।
इड्ढिविसेसेण पुणो, भणिया सव्वोवयारा वि ॥२०९॥
पञ्चोपचारयुक्ता पूजाऽष्टोपचारकलिता च ।
ऋद्धिविशेषेण पुनर्भणिता सर्वोपचाराऽपि ॥ २०९ ॥

पञ्चोपचारा-ऽष्टोपचारा

तहियं पंचुवयारा, कुसुम-क्खय-गंध-धूव-दीवेहिं ।
फल-जल-नेवज्जेहिं, सहऽट्ठरूवा भवे सा उ ॥२१०॥
तथैवं पञ्चोपचारा कुसुमा-क्षत-गन्ध-धूप-दीपैः ।
फल-जल-नैवेद्यैः सहाऽष्टरूपा भवेत्सा तु ॥ २१० ॥

अन्यमतम्

अन्ने अट्ठुवयारं, भणंति अट्ठंगमेव पणिवायं ।
सो पुण सुए न दीसइ, न य आइण्णो जिणमयम्मि २११
अन्येऽष्टोपचारां भणन्त्यष्टाङ्गमेव प्रणिपातम् ।
स पुनः श्रुते न दृश्यते न चार्चीर्णो जिनमते ॥२११॥

सव्वोवयारजुत्ता, ण्हाण-च्चण-नट्ट-गीयमाईहिं ।
पव्वाइएसु कीरइ, निच्चं वा इड्ढिमंतेहिं ॥ २१२ ॥
सर्वोपचारयुक्ता स्नाना-ऽर्चन-नृत्य-गीतादिभिः ।
पर्वादिकेषु क्रियते नित्यं वा ऋद्धिमद्भिः ॥ २१२ ॥

तहा—

विग्घोवसामिगेगा, अब्भुदयपसाहणी भवे बीया । पूजाफलम्
नेव्वाणसाहणी तह, फलया उ जहत्थनामेहिं॥२१३॥

तथा—

विघ्नोपशामिकैकाऽभ्युदयप्रसाधनी भवेद्द्वितीया ।
निर्वाणसाधनी तथा फलदा तु यथार्थनामभिः ॥ २१३ ॥

पवरं पुप्फाईयं, पढमाए ढोयए उ तक्कारी । आद्यपूजाद्वयोपयोगीनि वस्तूनि.
आणेइ अन्नओ वि हु, निओगओ बीयपूजाए॥२१४
प्रवरं पुष्पादिकं प्रथमायां ढौकते तु तत्कारी ।
आनयत्यन्यतोऽपि खलु नियोगतो द्वितीयपूजायाम॥ २१४

भुवणे वि सुंदरं जं, वत्था-ऽऽहरणाइवत्थु संभवइ ।
तं मणसा संपाडइ, जिणम्मि एगग्गथिरचित्तो॥२१५॥
भुवनेऽपि सुन्दरं यद्वस्त्रा–ऽऽभरणादिवस्तु संभवति ।
तन्मनसा संपादयति जिने एकाग्रस्थिरचित्तः ॥ २१५ ॥

निच्चं चिय संपुन्ना, जइ वि हु एसा न तीरए काउं ।
तह वि अणुचिट्ठिअव्वा, अक्खय-दीवाइदाणेण ॥२१६
नित्यमेव संपूर्णा यद्यपि खल्वेषा न तीर्यते (शक्यते) कर्तुम ।
तथाऽप्यनुष्ठातव्याऽक्षत–दीपादिदानेन ॥ २१६ ॥

भाविज्ज अवत्थतियं, पिंडत्थ-पयत्थ-रूवरहियत्तं । जिनस्य अवस्थात्रयम्
छउमत्थ-केवलित्तं, मुत्तत्तं चेव तस्सत्थो ॥ २१७ ॥

भावयेताऽवस्थात्रिकं पिण्डस्थ–पदस्थ–रूपरहितत्वम् ।
छद्मस्थ–केवलित्वं मुक्तत्वं चैव तस्यार्थः ॥ २१७ ॥

उभयकरधरियकलसा, गयगयसुरवइपुरस्सरा तियसा।
गायंता वायंता, उवरि जिणिंदस्स निम्मविया॥२१८॥
उभयकरधृतकलशा गजगतसुरपतिपुरस्सरास्त्रिदशाः ।
गायन्तो वादयन्त उपरि जिनेन्द्रस्य निर्मिताः ॥ २१८॥

ठावेंति मणे नूणं, संपइ अम्हारिसस्स लोयस्स ।
जम्मणसमयपयट्टं, मज्जणमहिमासमारंभं ॥ २१९ ॥
स्थापयन्ति मनसि नूनं संप्रत्यस्मादृशस्य लोकस्य ।
जन्मसमयप्रवृत्तं मज्जनमहिमासमारम्भम् ॥ २१९ ॥

वत्था-ऽऽहरण-विलेवण-मलेहिँ विभूसिओ जिणवरिंदो।
रायसिरिमणुहवंतो, भाविज्जइ भवियलोएण ॥२२०॥
वस्त्रा–ऽऽभरण–विलेपन–माल्यैर्विभूषितो जिनवरेन्द्रः ।
राज्यश्रियमनुभवन् भाव्यते भव्यलोकेन ॥ २२० ॥

छद्मस्थावस्था

अवगयकेसं सीसं, मुहं च दिट्ठं पि भुवणनाहस्स ।
साहेइ समणभावं, छउमत्थो एस पिंडत्थो ॥ २२१ ॥
अपगतकेशं शीर्षं मुखं च दृष्टमपि भुवननाथस्य ।
कथयति श्रमणभावं छद्मस्थ एष पिण्डस्थः ॥ २२१ ॥

कंकेल्लि[1] कुसुमवुट्ठी दिव्वज्झुणि चमरिधारिणो उभओ।
सिंहासण भामंडल दुंदुहि छत्तत्तयं चेव ॥ २२२ ॥
कङ्केलिः कुसुमवृष्टिः दिव्यध्वनिः चामरधारिण उभयतः ।
सिंहासनं भामण्डलं दुन्दुभिः छत्रत्रयं चैव ॥ २२२ ॥

तीर्थंकरावस्था

इय पाडिहेररिद्धी, अणन्नसाहारणा पुरा आसि ।
केवलियनाणलंभे, तित्थयरपयम्मि पत्तस्स ॥ २२३

१. अशोकवृक्षवाचकोऽयं शब्दो देश्यप्राकृतः, तथा च "कंकेल्ली अ असोए"– देशीनाममालायां द्वितीयवर्गे १२ श्लोकः ।

इति प्रातिहार्यर्द्धिरनन्यसाधारणा पुराऽऽसीत् ।
केवलिकज्ञानलाभे तीर्थकरपदे प्राप्तस्य ॥ २२३ ॥

पलियंकसन्निसन्नो, उद्धट्ठाणट्ठिओ य किर भयवं । मुक्तावस्था
एए दो आयारा, अरूवभावे जिणवराणं ॥ २२४ ॥
पर्यङ्कसन्निषण्ण ऊर्ध्वस्थानस्थितश्च किल भगवान् ।
एतौ द्वावाकारावरूपभावे जिनवराणाम् ॥ २२४ ॥

एवमवत्थाण तियं, सम्मं भावेज्ज वंदणासमए ।
जिणबिंबविहियनिच्चलनयणजुओ सुद्धपरिणामो २२५
एवमवस्थानां त्रिकं सम्यग् भावयेत वन्दनासमये ।
जिनबिम्बविहितनिश्चलनयनयुगः शुद्धपरिणामः ॥२२५॥

एत्तो य वाम–दाहिण–पच्छिमदिसिदंसणं परिहरेज्जा । त्रिदिग्निरीक्षणविरतिः
तिदिसिनिरिक्खणविरई,एवं चिय होइ नायव्वा २२६
एतस्माच्च वाम–दक्षिण–पश्चिमदिग्दर्शनं परिहरेत् ।
त्रिदिग्निरीक्षणविरतिरेवमेव भवति ज्ञातव्या ॥ २२६ ॥

आलोयचलं चक्खुं, मणो व्व तं दुक्करं थिरं काउं ।
रूवेहिं तहिं खिप्पइ, सभावओ वा सयं चलइ २२७
आलोकचलं चक्षुर्मन इव तद्दुष्करं स्थिरं कर्तुम् ।
रूपैस्तैः क्षिप्यते स्वभावतो वा स्वयं चलति ॥ २२७ ॥

तह वि हु नामियगीवो,विसेसओ दिसितियं न पेहेज्जा ।
तत्थ उवओगभावे, वंदणपरिणामहाणी उ ॥ २२८ ॥
तथाऽपि खलु नामितग्रीवो विशेषतो दिक्त्रिकं न प्रेक्षेत ।
तत्रोपयोगभावे वन्दनपरिणामहानिस्तु ॥ २२८ ॥

ठाऊण उचियदेसे,चिइवंदणकरणजोगभूभाए । त्रिवारं पदभूमिप्रमार्जनम्
दिट्ठीए पेहेत्ता,विहिणा उभओ पमज्जिज्जा ॥ २२९ ॥
स्थित्वोचितदेशे चैत्यवन्दनकरणयोगभूभागे ।
दृष्ट्या प्रेक्ष्य विधिनोभतः प्रमार्जयेत् ॥ २२९ ॥

समभिउपम्हलचेलंचलेण सड्ढो पमज्जणं कुणइ ।
तिक्खुत्तो वि–तिवारं,साहू रयहरदसग्गेहिं ॥ २३० ॥
सममृदुपक्ष्मलचेलाञ्चलेन श्राद्धः प्रमार्जनं करोति ।
त्रिकृत्वो द्वि–त्रिवारं साधू रजोहर(ण)दशाग्रैः ॥ २३० ॥

वर्ण–आदित्रिकम्

भावेज्ज य वंदंतो,वन्नाइतियं मणम्मि एगग्गो ।
तं पुण भणंति मुणिणो,वन्नत्थालंबणसरूवं ॥ २३१ ॥
भावयेत च वन्दमानो वर्णादित्रिकं मनस्येकाग्रः ।
तं पुनर्भणन्ति मुनयो वर्णार्थालम्बनस्वरूपम् ॥ २३१ ॥

वर्णस्वरूपम्

थुइदंडाईवन्ना, उच्चरियव्वा फुडा सुपरिसुद्धा ।
सर–वंजणाइभिन्ना, सपयच्छेया उचियघोसा ॥२३२॥
स्तुतिदण्डादिवर्णा उच्चरितव्याः स्फुटाः सुपरिशुद्धाः ।
स्वर–व्यञ्जनादिभिन्नाः सपदच्छेदा उचितघोषाः॥२३२॥

अर्थचिन्तना

चिंतेयव्वो सम्मं, तेसिं अत्थो जहापरिन्नाणं ।
सुन्नहिययत्तमिहरा, उत्तमफलसाहगं न भवे ॥२३३॥
चिन्तयितव्यः सम्यक् तेषामर्थो यथापरिज्ञानम् ।
शून्यहृदयत्वमितरथोत्तमफलसाधकं न भवेत् ॥ २३३ ॥

आलम्बनस्मृतिः

भावारिहंतपमुहं, सरेज्ज आलंबणं पि दंडेसु ।
अहवा जिणबिंबाई, जस्स पुरो वंदणाऽऽरद्धा ॥२३४॥
भावार्हत्–प्रमुखं स्मरेदालम्बनमपि दण्डेषु ।
अथवा जिनबिम्बादि यस्य पुरो वन्दनाऽऽरब्धा ॥२३४॥

मुद्रात्रयम्

कयपंचंगपणामो, साणंदो वंदणे पयट्टंतो ।
धारेज्ज धीरचित्तो, मुद्दाओ तिन्नि जं भणियं ॥ २३५॥
कृतपञ्चाङ्गप्रणामः सानन्दो वन्दने प्रवर्त्तमानः ।
धारयेद् धीरचित्तो मुद्रास्तिस्रो यद्भणितम्[1] ॥ २३५ ॥

---

१. 'यद् भणितम्' इति पश्चादाके यद् भणितमित्यवसेयम् ।

पंचंगो पणिवाओ, थुइपाढो होइ जोगमुद्दाए । पंचांगसा-
वंदण जिणमुद्दाए, पणिहाणं मुत्तसुत्तीए ॥ २३६ ॥ क्ष्यम्

पञ्चाङ्गः प्रणिपातः स्तुतिपाठो भवति योगमुद्रायाम् ।
वन्दनं जिनमुद्रायां प्रणिधानं मुक्ताशुक्त्याम् ॥ २३६ ॥

दो जाणू दोन्नि करा, पंचमयं होइ उत्तमंगं तु । पंचाङ्गप्रणि-
सम्मं संपणिवाओ, नेओ पंचंगपणिवाओ ॥ २३७ ॥ पातः

द्वौ जानू द्वौ करौ पञ्चमकं भवत्युत्तमाङ्गं तु ।
सम्यक् संप्रणिपातो ज्ञेयः पञ्चाङ्गप्रणिपातः ॥ २३७ ॥

अन्नोन्नंतरियंगुलिकोसागारेहिँ दोहिँ हत्थेहिँ । योगमुद्रा
पिट्टोवंरि कुप्परसंठिएहिं तह जोगमुद्द त्ति ॥ २३८ ॥

अन्योन्यान्तरिताङ्गुलिकोशाकाराभ्यां द्वाभ्यां हस्ताभ्याम् ।
उदरोपरि कूर्परस्थिताभ्यां तथा योगमुद्रेति ॥ २३८ ॥

चत्तारि अंगुलाइं, पुरओ ऊणाइं जत्थ पच्छिमओ । जिनमुद्रा
पायाणं उस्सग्गो, एसा पुण होइ जिणमुद्दा ॥२३९॥

चत्वारोऽङ्गुल्यः पुरत ऊना यत्र पश्चिमतः ।
पादयोरुत्सर्ग एषा पुनर्भवति जिनमुद्रा ॥ २३९ ॥

मुत्तासुत्ती मुद्दा, समा जहिं दो वि गब्भिया हत्था । मुक्ताशुक्तिमुद्रा
ते पुण णिडालदेसे, लग्गा अन्ने अलग्ग त्ति ॥२४०॥

मुक्ताशुक्तिर्मुद्रा समौ यत्र द्वावपि गर्भितौ हस्तौ ।
तौ पुनर्ललाटदेशे लग्नावन्येऽलग्नाविति ॥ २४० ॥

चोयगो—

पृच्छा वन्नाइसु उवओगो, जुगवं कह घडइ एगसमयम्मि ?।
दो उवओगा समए, केवलिणो वि हु न जं इट्ठा॥२४१॥

चोदकः—

वर्णादिषूपयोगो युगपत्कथं घटत एकसमये ।
द्वावुपयोगौ समये केवलिनोऽपि खलु न यदिष्टौ ॥ २४१

आयरिओ—

उत्तरम् कमसो वि संभवंता, जुगवं नज्जंति ते वि भिन्ना वि ।
चित्तस्स सिग्घकारित्तणेण एगत्तभावाओ ॥ २४२ ॥

आचार्यः—

क्रमशोऽपि संभवन्तौ युगपज्ज्ञायेते तावपि भिन्नावपि ।
चित्तस्य शीघ्रकारित्वेनैकत्वभावात् ॥ २४२ ॥

भणियं च—

पञ्चाशकगाथा सव्वत्थ वि पणिहाणं, तग्गयकिरिया–भिहाण–वन्नेसु ।
अत्थे विसए य तहा, दिट्ठंतो छिन्नजालाए ॥ २४३ ॥

भणितं च—

सर्वत्रापि प्रणिधानं तद्गतक्रिया–भिधान–वर्णेषु ।
अर्थे विषये च तथा दृष्टान्तः छिन्नज्वालायाः ॥ २४३ ॥

अहवा—

शास्त्रान्तरप्रामाण्यम् केवलिणो उवओगो, वच्चइ जुगवं समत्थनेएसु ।
छउमत्थस्स व एवं, अभिन्नविसयासु किरियासु ॥२४४॥

अथवा—

केवलिन उपयोगो व्रजति युगपत्समस्तज्ञे(ने)येषु ।
छद्मस्थस्य वा एवमभिन्नविषयासु क्रियासु ॥ २४४ ॥

---

१. इयं गाथा तृतीये पञ्चाशके २३तमा–(पृ०६०)

तथा चागमः—

भिन्नविसयं निसिद्धं, किरियादुगमेगया न एगम्मि ।
जोगतिगस्स वि भंगियसुत्ते किरिया जओ भणिया ॥

तथा चागमः—

भिन्नविषयं निषिद्धं क्रियाद्विकमेकदा नैकस्मिन् ।
योगत्रिकस्यापि भङ्गिकसूत्रे क्रिया यतो भणिता ॥२४५॥

एएण थोत्तपढणं, कुणंति नो जे पयाहिणं देंता ।
तेसिं पि कुमइसल्लं, उद्धरियं चेव दट्ठवं ॥ २४६ ॥ क्रियान्तरं कुर्वतोऽपि स्तोत्रपाठः

एतेन स्तोत्रपठनं कुर्वन्ति नो ये प्रदक्षिणां ददतः ।
तेषामपि कुमतिशल्यमुद्धरितमेव द्रष्टव्यम् ॥ २४६ ॥

तिविहं पणिहाणं पुण, मण–वइ–कायाण जं समाहाणं । प्रणिधानत्रिकम्
राग-दोसाभावो, भावत्थो होइ एयस्स ॥ २४७ ॥

त्रिविधं प्रणिधानं पुनर्मनो–वाक्–कायानां यत्समाधानम् ।
राग–द्वेषाऽभावो भावार्थो भवत्येतस्य ॥ २४७ ॥

अहवा—

चिंतइ न अन्नकज्जं, दूरं परिहरइ अट्ट–रोद्दाइं । मनःप्रणिधानम्
एगग्गमणो वंदइ, मणपणिहाणं हवइ एयं ॥ २४८ ॥

अथवा—

चिन्तयते नान्यकार्यं दूरं परिहरत्यार्त्त–रौद्रे ।
एकाग्रमना वन्दते मनःप्रणिधानं भवत्ये(तन्)वम्॥२४८॥

विगहा–विवायरहिओ, वज्जितो मूय-ढड्डरं सद्दं । वचःप्रणिधानम्
वंदइ सपयच्छेयं, वायापणिहाणमेतं तु ॥ २४९ ॥

विकथा–विवादरहितो वर्जयन्मूक-ढड्डरं शब्दम् ।
वन्दते सपदच्छेदं वाक्प्रणिधानमेतत्तु ॥ २४९ ॥

---

१. "भंगियसुत्तं गुणंतो" भङ्गिकश्रुतम्–रचितग्रन्थविशेषम्, अन्यद् वा–श्रीआवश्यके हरिभद्रीयां (पृ०७७५–७७६)

कायप्रणिधानम्

पेहंत-पमज्जंतो, करेइ उट्ठण-निसीयणाईयं ।
वावारंतररहिओ, वंदइ इय कायपणिहाणं ॥ २५० ॥

प्रेक्षमाण-प्रमार्जयन् करोत्युत्थान-निषदनादिकम् ।
व्यापारान्तररहितो वन्दत इति कायप्रणिधानम् ॥२५०॥

एयं पुण तिविहं पि हु, वंदंतेणाइओ उ कायव्वं ।
जम्हा दह-तियसारा, सुवंदणा होइ एवं तु ॥ २५१ ॥

एतत्पुनस्त्रिविधमपि खलु वन्दमानेनाऽऽदितस्तु कर्त्तव्यम् ।
यस्माद्दश-त्रिकसारा सुवन्दना भवत्येवं तु ॥ २५१ ॥

भणियं च—

इय दह-तियपरिसुद्धं, वंदणयं जो जिणाण तिकालं ।
कुणइ नरो उवउत्तो, सो पावइ सासयं ठाणं ॥२५२॥

भणितं च—

इति दश-त्रिकपरिशुद्धं वन्दनकं यो जिनानां त्रिकालम् ।
करोति नर उपयुक्तः स प्राप्नोति शाश्वतं स्थानम् ॥२५२॥

अन्यप्रकारेण वन्दनत्रिविधता

अन्नं पि तिप्पयारं, वंदणपेरंतभावि पणिहाणं ।
जम्मि कए संपुन्ना, उक्कोसा वंदणा होइ ॥ २५३ ॥

अन्यदपि त्रिप्रकारं वन्दनपर्यन्तभावि प्रणिधानम् ।
यस्मिन् कृते संपूर्णोत्कृष्टा वन्दना भवति ॥ २५३ ॥

तत्स्वरूपम्

चेइयगय साहुगयं, नायव्वं तह य पत्थणारूवं ।
एयस्स पुण सरूवं, सविसेसं उवरिं वोच्छामि॥२५४॥

चैत्यगतं साधुगतं ज्ञातव्यं तथा च प्रार्थनारूपम् ।
एतस्य पुनः स्वरूपं सविशेषमुपरि वक्ष्ये ॥ २५४ ॥

वंदणविहाणमेयं, संखेवेणं मए समक्खायं ।
अभणियपुव्वं सेसं, अवसरपत्तं भणिस्सामि ॥ २५५ ॥

वन्दनविधानमेतत्संक्षेपेण मया समाख्यातम् ।
अभणितपूर्वं शेषमवसरप्राप्तं भणिष्यामि ॥ २५५ ॥

अन्नत्थाऽभणियं पि हु, आयरणाओ मए इमं भणियं । अस्य अन्यत्राऽपाठः

जडभावदूसियाणं, भव्वाणमणुग्गहट्ठाए ॥ २५६ ॥

अन्यत्राऽभणितमपि खल्वाचरणातो मयेदं भणितम् ।

जडभावदूषितानां भव्यानामनुग्रहार्थम् ॥ २५६ ॥

सूरिपरंपरपत्तो, अत्थो सत्थे न गंथिओ जाव । अर्थग्रहणाऽशक्तिः

ता घेत्तुं दाउं वा, न तीरए मंदबुद्धीहिं ॥ २५७ ॥

सूरिपरंपराप्राप्तोऽर्थः शास्त्रे न ग्रथितो यावत् ।

तावद् ग्रहीतुं दातुं वा न तीर्यते(शक्यते)मन्दबुद्धिभिः ॥

सुहगहण-धारणत्थं, तेसिं एयं समासओ रइयं । वन्दनासूत्रार्थनिरूपणम्

फुडवियडपायडत्थं, भणामि सुत्तत्थमेत्ताहे ॥२५८॥

सुखग्रहण-धारणार्थं तेषामेतत्समासतो रचितम् ।

स्फुटविकटप्रकटार्थं भणामि सूत्रार्थमिदानीम् ॥ २५८ ॥

सो पुण पुव्वकईहिं, भणिओ चिय ललियवित्थराईसु । ललितविस्तरादयः

किंतु महामइगम्मो, दुरवगम्मो पागयजणस्स ॥ २५९ ॥

स पुनः पूर्वकविभि[1]र्भणितः खलु ललितविस्तरादिषु ।

किन्तु महामतिगम्यो दुरवगम्यः प्राकृतजनस्य ॥ २५९ ॥

दुक्खरोचा विउसा, बाला भणियं पि नेव बुज्झंति । प्रयासप्रयोजनम्

तो मज्झिमबुद्धीणं, हियत्थमेसो पयासो मे ॥२६०॥

दुष्कररोचा विदुषा बाला भणितमपि नैव बुध्यन्ते ।

ततो मध्यमबुद्धीनां हितार्थमेष प्रयासो मे ॥ २६० ॥

जं सम्मवंदणाए, जायइ जीवस्स सुंदरो भावो ।

तत्तो पुण कम्मखओ, तओ वि सव्वं सुकल्लाणं ॥२६१॥

यत्सम्यग्वन्दनायां जायते जीवस्य सुन्दरो भावः ।

ततः पुनः कर्मक्षयस्ततोऽपि सर्वं सुकल्याणम् ॥ २६१ ॥

---

[1] पूर्वाचार्यैः श्रीहरिभद्रसूरिभिः ।

सम्मजिणवंदणं पुण, विहाण-अत्थाववोहओ होइ ।
तत्थ विहाणं भणियं, सुत्तपयत्थं अओ वोच्छं॥२६२॥
सम्यग्जिनवन्दनं पुनर्विधाना-ऽर्थाववोधतो भवति ।
तत्र विधानं भणितं सूत्रपदार्थमतो वक्ष्ये ॥ २६२ ॥

इह साहू सड्ढो वा, चेइयगेहाइउचियदेसम्मि ।
जहजोगं कयपूओ, पमोयरोमंचियसरीरो ॥ २६३ ॥
इह साधुः श्राद्धो वा चैत्यगृहाद्युचितदेशे ।
यथायोगं कृतपूजः प्रमोदरोमाञ्चितशरीरः ॥ २६३ ॥

वन्दकविचारणा

धन्नोऽहं कयपुन्नो, अणोरपारम्मि भवसमुद्दम्मि ।
जेण मए संपत्तं, जिणवंदणसुत्तबोहित्थं ॥ २६४ ॥
धन्योऽहं कृतपुण्योऽनवरपारे भवसमुद्रे ।
येन मया संप्राप्तं जिनवन्दनसूत्रवोहित्थम् ॥ २६४ ॥

एयं परमं तत्तं, कायव्वमिओ वि नाऽवरं भुवणे ।
विज्जं पिव मंतं पिव, विहिणाऽऽराहेमि ता एयं॥ २६५ ॥
एतत्परमं तत्त्वं कर्त्तव्यमितोऽपि नापरं भुवने ।
विद्यामिव मन्त्रमिव विधिनाऽऽराधये तत एतत् ॥२६५॥

एवं संवेगरसायणेण सुत्थीभवंतसव्वंगो ।
अइयारभीरुयाए, पडिलेह-पमज्जणुज्जुत्तो ॥ २६६ ॥
एवं संवेगरसायनेन स्व(सु)स्थीभवत्सर्वाङ्गः ।
अतिचारभीरुतया प्रतिलेख(न)-प्रमार्जनोद्युक्तः ॥ २६६॥

उद्दामसरं वेयालिओ व पढिऊण सुकइबद्धाइं ।
सपराणंदकराइं, मंगलचित्ताइं वित्ताइं ॥ २६७ ॥
उद्दामस्वरं वैतालिक इव पठित्वा सुकविबद्धानि ।
स्वपरानन्दकराणि मङ्गलचित्राणि वृत्तानि ॥ २६७ ॥

प्रणिपातस्तवभणनविधिः

कयपंचंगपणामो, दाहिणजाणुं महीएँ विणिहट्टु ।
इयरं मणा अलग्गं, ठविऊण कयंजलीमउलो ॥२६८॥

कृतपञ्चाङ्गप्रणामो दक्षिणजानुं महां विनिधृत्य ।
इतरं मनागलग्नं स्थापयित्वा कृताञ्जलिमुकुलः ॥ २६८॥

जिणबिंबपायपंकयविणिवेसियनयणमाणसो धणियं।
अक्खलियाइगुणजुयं, पणिवायथयं[तओ]पढइ ॥२६९॥

जिनबिम्बपादपङ्कजविनिवेशितनयनमानसोऽत्यर्थम् ।
अस्खलितादिगुणयुतं प्रणिपातस्तवं ततः पठति ॥२६९॥

"नमोऽत्थु णं अरहंताणं भगवंताणं" इत्यादि ॥

'नमोऽस्तु अर्हद्भ्यो भगवद्भ्यः' इत्यादि ॥

एयस्स उ वक्खाणं, संहियमाई कमेण छब्भेयं। व्याख्यानस्य
पुव्वपुरिसेहिं दिट्ठं, उवइट्ठं तह य एवं तु ॥२७०॥ षोढात्वम्

एतस्य तु व्याख्यानं संहितादि क्रमेण षड्भेदम् ।
पूर्वपुरुषैर्दृष्टमुपदिष्टं तथा चैवं तु ॥ २७० ॥

संहिया य पयं चेव, पयत्थो पयविग्गहो ।
चालणं पच्चवत्थाणं, वक्खाणं छव्विहं मयं ॥ २७१ ॥

---

१. गाथायामयं देश्यः "धणिअं गाढम्"–देशीनाममालायां पञ्चमे वर्गे ५८ श्लोके । २. पूर्णसूत्रम्—नमु(मो)ऽत्थु णं अर(रि)हंता णं, भगवंताणं ॥ १ ॥ आइगराणं, तित्थयराणं, सयंसंबुद्धाणं ॥२॥ पुरिसुत्तमाणं, पुरिससीहाणं, पुरिसवरपुंडरीआणं, पुरिसवरगंधहत्थीणं ॥ ३ ॥ लोगुत्तमाणं, लोगनाहाणं, लोगहिआणं, लोगपईवाणं, लोगपज्जोअगराणं ॥४॥ अभयदयाणं, चक्खुदयाणं, मग्गदयाणं, सरणदयाणं, बोहिदयाणं ॥ ५ ॥ धम्मदयाणं, धम्मदेसयाणं, धम्मनायगाणं, धम्मसारहीणं, धम्मवरचाउरंतचक्कवट्टीणं ॥ ६ ॥ अप्पडिहयवरनाणदंसणधराणं विअट्टछउमाणं ॥ ७ ॥ जिणाणं, जावयाणं, तिन्नाणं, तारयाणं, बुद्धाणं, बोहयाणं, मुत्ताणं, मोअगाणं ॥ ८ ॥ सव्वन्नूणं, सव्वदरिसीणं, सिव-मयल-मरुअ-मणंत-मक्खय-मव्वाबाह-मपुणरावित्ति सिद्धिगइनामधेयं ठाणं संपत्ताणं, नमो जिणाणं जिअभयाणं ॥ ९ ॥ ३. एतद्विवरणं विशेषावश्यके १००७ गाथातो—

संहिता च पदं चैव पदार्थः पदविग्रहः ।
चालनं प्रत्यवस्थानं व्याख्यानं षड्विधं मतम् ॥ २७१ ॥

संहिता. अक्खलियसुत्तुचारणरूवा इह संहिया मुणेयव्वा ।
सा सिद्धि च्चिय नेया, विसुद्धसुत्तस्स पढणेण ॥२७२॥
अस्खलितसूत्रोच्चारणरूपेह संहिता ज्ञातव्या ।
सा सिद्धिः खलु ज्ञेया विशुद्धसूत्रस्य पठनेन ॥ २७२ ॥

पदम् तह संपयनामाइं, महापयाइं हवंति नव एत्थ ।
अत्थपयणा उ जम्हा, होइ पयं समयभासाए ॥२७३
तथा संपन्नामानि महापदानि भवन्ति नवात्र ।
अर्थपचनात्तु यस्माद्भवति पदं समयभाषायाम् ॥२७३॥

आलावयरूवाइं, तेत्तीसं वन्नियाइं सूरीहिं ।
ताइं पुण एवं खलु, संपयनवगे विहत्ताइं ॥ २७४ ॥
आलापकरूपाणि त्रयस्त्रिंशद्वर्णितानि सूरिभिः ।
तानि पुनरेवं खलु संपन्नवके विभक्तानि ॥ २७४ ॥

दो तिय चउरो पंच य, पंच य पंच य दुगं चउक्कं च ।
तिन्नेव य आलावा, संपयनवगे अणुक्कमसो ॥२७५॥
द्वौ त्रयश्चत्वारः पञ्च च पञ्च च पञ्च च द्वौ (द्विकं) चत्वारश्च (चतुष्कं च) ।
त्रय एव चालापा संपन्नवकेऽनुक्रमशः ॥ २७५ ॥

'नमोऽत्थुणं' इत्यस्य अर्थः एएसिं अत्थो पुण, नमो त्ति नमणं इमो मम पणामो ।
अत्थु त्ति होउ संपज्जउ त्ति णं वक्कलंकारे ॥ २७६ ॥
एतेषामर्थः पुनः 'नमः' इति नमनमयं मम प्रणामः ।
'अस्तु' इति भवतु संपद्यतामिति 'णं' वाक्यालङ्कारे ॥२७६॥

अर्हच्छब्दार्थः होउ पणामो एसो, अरहंताणं ति एस संबंधो ।
अट्ठविहपाडिहेरं, अरहंती तेण अरहंता ॥ २७७ ॥
भवतु प्रणाम एषोऽर्हद्भ्य इत्येष संबन्धः ।
अष्टविधप्रातिहार्यमर्हन्ति तेनार्हन्तः ॥ २७७ ॥

भणियं च—

असोगरुक्खो सुरपुप्फवुट्ठी, दिव्वो ज्झुणी चामरमासणं च ।
भामंडलं दुंदुहि याऽऽयवत्तं,सुपाडिहेराणि जिणाणमेव ॥[1]

भणितं च—

अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासनं च ।
भामण्डलं दुन्दुभिश्चातपत्रं सुप्रातिहार्याणि जिनानामेव ॥

अरहंति वंदणनमंसणाणि अरहंति पूयसक्कारं । निर्युक्तिभाद्र॰ बाहवी
सिद्धिगमणं च अरिहा, अरहंता तेण वुच्चंति॥२७९॥[2]

अर्हन्ति वन्दन-नमस्यनान्यर्हन्ति पूजासत्कारम् ।
सिद्धिगमनं चार्हाः अर्हन्तस्तेनोच्यन्ते ॥ २७९ ॥

उत्तमगुणसंपन्ना अरिहा, जोग्ग त्ति तेसि ते अंता ।
भुवणे वि जेण नन्नो, तेहिंतो उत्तमो अत्थि॥२८०॥

उत्तमगुणसंपन्ना अर्हा योग्या इति तेषां तेऽन्ताः ।
भुवनेऽपि येन नान्यस्तेभ्य उत्तमोऽस्ति ॥ २८० ॥

न रहंति न चिट्ठंती, भवम्मि जं तेण वा वि अरहंता ।
अहव रहो पच्छन्नं, अंतो वा नत्थि नाणस्स॥२८१॥

न वसन्ति न तिष्ठन्ति भवे यत्तेन वाप्यऽरहन्तः ।
अथवा रहः प्रच्छन्नमन्तो वा नास्ति ज्ञानस्य ॥ २८१ ॥

अहवा अरिणो सत्तू, हंतारो तेसि तेण अरिहंता ।
अट्ठविहकम्मपमुहा, ते नेया जेणिमं सुत्तं ॥ २८२ ॥

अथवाऽरयः शत्रवो हन्तारस्तेषां तेनाऽरिहन्ताः ।
अष्टविधकर्मप्रमुखास्ते ज्ञेया येनेदं सूत्रम् ॥ २८२ ॥

---

१. अयं चैवं संस्कृतः श्लोकः—
"अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासनं च ।
भामण्डलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम्" ॥

२. इयं गाथा आवश्यकसूत्रे ९२१ तमा—आवश्यके ( पृ॰ ४०६ ) ।

निर्युक्तिः

[1]अट्ठविहं पि य कम्मं, अरिभूयं होइ सवजीवाणं ।
तं कम्ममरिं हंता, अरिहंता तेण वुचंति ॥ २८३ ॥

अष्टविधमपि च कर्मारिभूतं भवति सर्वजीवानाम् ।
तं कर्मारिं हन्ता अरिहन्ताः तेनोच्यन्ते ॥ २८३ ॥

निर्युक्तिः

राग-दोस कसाए, इंदियाणि वि पंच वि ।
[2]एए अरिणो हंता, अरिहंता तेण वुचंति ॥ २८४ ॥

राग-द्वेष-कषायौ इन्द्रियाण्यपि पञ्चापि ।
एतेषां अरीणां हन्तारः अरिहन्तारः तेनोच्यन्ते ॥२८४॥

संसारवल्लरे जं, पुणो न रोहंति खीणकम्मत्ता ।
अरुहंता णं तेसिं, होउ नमो वा वि जं भणियं॥२८५॥

संसारवल्लरे यत्पुनर्न रोहन्ति क्षीणकर्मत्वात् ।
अरुहन्तः तेषां भवतु नमो वापि यद्भणितम् ॥२८५॥

दड्ढम्मि जहा बीए, न होइ पुण अंकुरस्स उप्पत्ती ।
तह कम्मबीयविरहे, भवंकुरस्सावि नो भावो॥२८६॥

दग्धे यथा बीजे न भवति पुनरङ्कुरस्योत्पत्तिः ।
तथा कर्मबीजविरहे भवाङ्कुरस्यापि नो भावः॥ २८६ ॥

भगवच्छब्दप्रयोजनम्

नामाइचउब्भेया, अरहंता जिणमयम्मि सुपसिद्धा ।
भावपडिवत्तिहेउं, भगवंताणं ति तो भणियं॥२८७॥

नामादिचतुर्भेदा अर्हन्तो जिनमते सुप्रसिद्धाः ।
भावप्रतिपत्तिहेतुं भगवद्भ्य इति ततो भणितम् ॥ २८७॥

भगवच्छब्दार्थः

तत्थ भगो छ[3]ब्भेओ, ईसरियाईण जं समग्गत्तं ।
ईसरियं रूव-जसो-सिरि-धम्म-पयत्तमेएसिं ॥२८८॥

---

१. इयं गाथा आवश्यकसूत्रे ९२० तथा—आवश्यके (पृ०४०६) २. "अत्र प्राकृतशैल्या छान्दसत्वात् 'सुपां सुपि' इत्यादिलक्षणतः एतेयामरीणां हन्तारः" इत्यावश्यकटीकायां सूत्रुयाकिन्या महत्तरायाः । ३. "ऐश्वर्यस्य समग्रस्य रूपस्य यशसः श्रियः । धर्मस्याथ प्रयत्नस्य षण्णां भग इतीङ्गना ॥" इति प्रज्ञापनावृत्तौ भगवद्-शब्दविवेचने श्रीमलयो भगवान् ।

तत्र भगः षड्भेद ऐश्वर्यादीनां यत्समग्रत्वम् ।
ऐश्वर्यं रूप-यशः-श्री-धर्म-प्रयत्नमेतेषाम् ॥ २८८ ॥

ईसरियं पि पहुत्तं, ससुरासुरमणुयजीवलोगस्स । भग-स्वरूपम्
एएसिं संपुन्नं, रूवं पि जमाऽऽगमे भणियं ॥ २८९ ॥
ऐश्वर्यमपि प्रभुत्वं ससुराऽसुरमनुजजीवलोकस्य ।
एतेषां संपूर्णं रूपमपि यदागमे भणितम् ॥ २८९ ॥

सव्वेसुरा जइ रूवं, अंगुट्ठपमाणयं विउव्वेज्जा । निर्युक्तिः
जिणपायंगुट्ठं पइ, न सोहए तं जहिंगालो ॥ २९० ॥
सर्वसुरा यदि रूपमङ्गुष्ठप्रमाणकं विकुर्युः ।
जिनपादाङ्गुष्ठं प्रति न शोभते तद् यथाऽङ्गारः ॥ २९० ॥

भरियभुवणंतरालो, गोखीर-तुसार-हार-ससिधवलो ।
तेलोक्के गिज्जंतो, जसो वि एएसि पडिपुन्नो ॥ २९१ ॥
भरितभुवनान्तरालं गोक्षीर-तुषार-हार-शशिधवलम् ।
त्रैलोक्ये गीयमानं यशोऽप्येतेषां प्रतिपूर्णम् ॥ २९१ ॥

पायारो-सरणाई, बाहिरलच्छी इमेसि संपुन्ना ।
केवलियनाण-दंसणपामोक्खा अंतरंगा वि ॥ २९२ ॥
प्राकारा-ऽवसरणादिर्बाह्यलक्ष्मीरेषां संपूर्णा ।
केवलिकज्ञान-दर्शनप्रमुखा अन्तरङ्गा अपि ॥ २९२ ॥

धम्मो वि हु एएसिं, संपुन्नो चेव हेउ-फलरूवो ।
जं तेहिंतो वि वरं, धम्मफलं तिहुयणे नत्थि ॥ २९३
धर्मोऽपि खल्वेतेषां संपूर्ण एव हेतु-फलरूपः ।
यत्तेभ्योऽपि वरं धर्मफलं त्रिभुवने नास्ति ॥ २९३ ॥

धम्मोज्जमो पयत्तो, संपुन्नो चेव लोगनाहाणं ।
करसंठिए वि मोक्खे, करेंति धम्मुज्जमं जेण ॥ २९४ ॥

---

१. आगमे निर्युक्तिस्वरूपे । २. इयं गाथा आवश्यकसूत्रे ५६९ क्रमा—
(पृ० ३१५)

घर्मोद्यमः प्रयत्नः संपूर्ण एव लोकनाथानाम् ।
करसंस्थितेऽपि मोक्षे कुर्वन्ति धर्मोद्यमं येन ॥ २९४ ॥

तित्थयरो चउनाणी, सुरमहिओ सिज्झियव्वयधुवम्मि ।
अणिगूहियवलविरिओ, सव्वत्थामेण उज्जमइ ॥२९५॥

तीर्थकरश्चतुर्ज्ञानी सुरमहितः सेद्धव्यकध्रुवे ।
अनिगूहित–वलवीर्यः सर्वस्थाम्नोद्यच्छति ॥ २९५ ॥

प्रथमा संपद् एसो छब्भेयभगो, विज्जइ जं तेसि तेण भगवंता ।
तेसिं लोगपहूणं, अत्थु नमो संपया पढमा ॥२९६॥

एष षड्भेदभगो विद्यते यत्तेषां तेन भगवन्तः ।
तेषां लोकप्रभूणामस्तु नमः संपत्प्रथमा ॥ २९६ ॥

इह पुण छट्ठविभत्ती, चउत्थिअत्थम्मि होइ दट्ठव्वा ।
पुव्वमुणीहिं पढिज्जइ, जं पाइयलक्खणे एवं २९७

इह पुनः षष्ठीविभक्तिः चतुर्थ्यर्थे भवति द्रष्टव्या ।
पूर्वमुनिभिः पठ्यते यत्प्राकृतलक्षण एवम् ॥ २९७ ॥

प्राकृतलक्षण-वाक्यम् बहुवयणेण दुवयणं, छट्ठविभत्तीए भन्नइ चउत्थी ।
जह हत्था तह पाया, नमोऽत्थु देवाहिदेवाणं॥२९८॥

बहुवचनेन द्विवचनं षष्ठीविभक्तौ भण्यते चतुर्थी ।
यथा हस्तौ तथा पादौ नमोऽस्तु देवाधिदेवेभ्यः ॥२९८॥

आदिकराः आइगरा ते भणिया, जम्हा उप्पन्नकेवला सव्वे ।
आइं कुणंति नियमा, सुयधम्म-चरित्तधम्माणं॥२९९॥

आदिकरास्ते भणिता यस्मादुत्पन्नकेवलाः सर्वे ।
आदिं कुर्वन्ति नियमात् श्रुतधर्म-चारित्रधर्माणाम्॥२९९॥

जओ—

निर्युक्तिः अत्थं भासइ अरिहा, सुत्तं गंथंति गणहरा निउणं[1] ।

---

१. इयं गाथा आवश्यकसूत्रे ९२ तमा—(१०९८)

सासणस्स हियट्ठाए, तओ सुत्तं पवत्तइ ॥ ३०० ॥

यतः—

अर्थं भापतेऽर्हन् सूत्रं ग्रथ्नन्ति गणधराः निपुणम् ।
शासनस्य हितार्थाय ततः सूत्रं प्रवर्त्तते ॥ ३०० ॥

सामाइयाइया वा, वय-जीवनिकायभावणा पढमं ।
एसो धम्मोवाओ, जिणेहिँ सव्वेहिँ उवइट्ठो ॥ ३०१ ॥

सामायिकादिका वा व्रत-जीवनिकायभावना प्रथमम् ।
एष धर्मोपायो जिनैः सर्वैरुपदिष्टः ॥ ३०१ ॥

तित्थं जिणेहि भणियं, संसारुत्तारकारणं संघो । तीर्थकराः
चाउवन्नो नियमा, कुणंति तं तेण तित्थयरा ॥३०२॥

तीर्थं जिनैर्भणितं संसारोत्तारकारणं सङ्घः ।
चातुर्वर्ण्यो नियमात् कुर्वन्ति तत् तेन तीर्थकराः॥३०२॥

सयमेव जओ सम्मं, बुद्धा नन्नेण बोहिया सव्वे । स्वयंसंबुद्धाः द्वितीया संपत्
तेण सयंसंबुद्धा, तेसि नमो संपया बीया ॥ ३०३ ॥

स्वयमेव यतः सम्यग्बुद्धा नान्येन बोधिताः सर्वे ।
तेन स्वयंसंबुद्धास्तेषां नमः संपद्द्वितीया ॥ ३०३ ॥

पुरिसा संसारिजिया, नर-नारय-तिरिय-देवगइवासी । पुरुषोत्तमाः
सव्वेसि तेसि पुज्जा, हवंति पुरिसोत्तमा तम्हा॥३०४॥

पुरुषाः संसारिजीवा नर-नारक-तिर्यग्देवगतिवासिनः ।
सर्वेषां तेषां पूज्या भवन्ति पुरुषोत्तमास्तस्मात् ॥ ३०४ ॥

बीहंति न चेव जओ, उवसग्ग-परीसहाण घोराणं । पुरुषसिंहाः
विअरंति असंकमणा, भण्णंति तओ पुरिससीहा ॥३०५॥

बिभ्यति न चैव यत उपसर्ग-परीषहाणां घोराणाम् ।
विचरन्त्यशङ्कमनसो भण्यन्ते ततः पुरुषसिंहाः ॥३०५॥

---

१. इयं गाथा आवश्यके २७१ तमा (पृ॰१४०)

पुरुषवरपुण्ड-रीकाः

पुरिसवरपुंडरीया, होंति जिणा पुंडरीयसाहम्मा ।
तं पुण वियारियव्वं, एवं सत्थत्थकुसलेहिं ॥ ३०६ ॥

पुरुषवरपुण्डरयिका भवन्ति जिनाः पुण्डरीकसाधर्म्यात् ।
तत्पुनर्विचारितव्यमेवं शास्त्रार्थकुशलैः ॥ ३०६ ॥

पंके जायं सलिलेण वड्ढियं उवरि संठियं तेसिं ।
एगेणावि न छुप्पइ, जह पवरं पुंडरीयं तं ॥ ३०७ ॥

पङ्के जातं सलिलेन वर्द्धितमुपरि संस्थितं तेषाम् ।
एकेनापि न स्पृश्यते यथा प्रवरं पुण्डरीकं तत् ॥ ३०७ ॥

एवं खलु तित्थयरा, जाया संसारपंकमज्झम्मि ।
पंचविहकामभोगोदएण संपाविया विद्धिं ॥ ३०८ ॥

एवं खलु तीर्थकरा जाताः संसारपङ्कमध्ये ।
पञ्चविधकामभोगोदयेन संप्रापिता वृद्धिम् ॥ ३०८ ॥

छुप्पंति न एक्केण वि, संपत्ता वीयरागपयमउलं ।
सासाइ सुरहिगंधं, वहंति वा पुंडरीयं व ॥ ३०९ ॥

स्पृश्यन्ते नैकेनापि संप्राप्ता वीतरागपदमतुलम् ।
श्वासादि सुरभिगन्धं वहन्ति वा पुण्डरीकमिव ॥ ३०९ ॥

वड्ढंति य उवयारे, नर–तिरियाणं निरीहपरिणामा ।
धारिज्जंति व सिरसा, नरा–ऽमरीसेहिं नमिरेहिं ॥ ३१० ॥

वर्धन्ते चोपकारे नर–तिर्यग्भ्योर्निरीहपरिणामाः ।
धार्यन्ते वा शिरसा नरा–ऽमरेशैर्नम्रैः ॥ ३१० ॥

पुरिसा वि जिणा एवं, पत्ता वरपुंडरीयउवमाणं ।
जह गंधहत्थिउवमा, पत्ता तह संपयं वोच्छं ॥ ३११ ॥

पुरुषा अपि जिना एवं प्राप्ता वरपुण्डरीकोपमानम् ।
यथा गन्धहस्त्युपमा प्राप्तास्तथा सांप्रतं वक्ष्ये ॥ ३११ ॥

पुरुषवरगन्ध-हस्तिनः

जह गंधहत्थिगंधं, असहंता कुंजरा पलायंति ।
ढुक्कंति नेव समरे, एगस्स वि ते अणेगा वि ॥ ३१२ ॥

यथा गन्धहस्तिगन्धमसहमानाः कुञ्जराः पलायन्ते ।
ढौकन्ते नैव समरे एकस्यापि तेऽनेके अपि ॥ ३१२ ॥

इय जत्थ जिणो विहरइ, देसे जोयणसयाउ तत्तो उ ।
रोगो-वसग्गकरिणो, सव्वे दूरेण नासंति ॥ ३१३ ॥

इति यत्र जिनो विहरति देशे योजनशतात् ततस्तु ।
रोगो-पसर्गकरिणः सर्वे दूरेण नश्यन्ति ॥ ३१३ ॥

तहाहि—

पुव्वुप्पन्ना रोगा, पसमंती ईति-वइर-मारीओ ।
अइवुट्ठि अणावुट्ठी, न होइ दुब्भिक्ख-डमरं वा ॥३१४॥

तथाहि—

पूर्वोत्पन्ना रोगाः प्रशाम्यन्ति ईति-वैर-मार्यः ।
अतिवृष्टिरनावृष्टिर्न भवति दुर्भिक्ष-डमरं वा ॥ ३१४ ॥

पुरिसवरगंधहत्थीण ताण सोंडीरभावकलियाणं । तृतीया संपद्
होउ पणामो एसो, चउप्पया संपया एसा ॥ ३१५ ॥

पुरुषवरगन्धहस्तिभ्यस्तेभ्यः शौण्डीरभावकलितेभ्यः ।
भवतु प्रणाम एष चतुष्पदा संपदेषा ॥ ३१५ ॥

लोगाईया पंच उ, आलावा संपया चउत्थी उ ।
तेसिं पुण लोगसद्दो, जहजोगमणेगहा नेओ ॥३१६॥

लोकादिकाः पञ्च त्वालापा संपच्चतुर्थी तु ।
तेषां पुनर्लोकशब्दो यथायोगमनेकधा ज्ञेयः ॥ ३१६ ॥

लोगस्स भव्वलोगस्स उत्तमाऽऽसन्नसिद्धिगामित्ता । लोकोत्तमाः
लोगोत्तम त्ति तेसिं, तह चेव य लोगनाहाणं ॥३१७

लोकस्य भव्यलोकस्योत्तमा आसन्नसिद्धिगामित्वात् ।
लोकोत्तमा इति तेभ्यः तथैव च लोकनाथेभ्यः ॥३१७॥

एत्थं पि लोगसद्दो, बीयाहाणाइउचियभव्वेसु । लोकनाथाः
ते नाहा तस्स जओ, जोगक्खेमंकरा नाहा ॥ ३१८॥

अत्राऽपि लोकशब्दो बीजाधानाद्युचितभव्येषु ।
ते नाथास्तस्य यतो योग-क्षेमङ्करा नाथाः ॥ ३१८ ॥

योग-क्षेमस्वरूपम्

जोगो असंतदाणं, संतस्स उ पालणा भवे खेमं ।
बीयाहाणाइगुणे, देंति पालेंति य जिणिंदा ॥३१९॥
योगोऽसद्दानं सतस्तु पालना भवेत्क्षेमम् ।
बीजाधानादिगुणान् ददति पालयन्ति च जिनेन्द्राः ॥३१९

लोकहिताः

पंचत्थिकायमइयं, लोगं वरकेवलेण जाणेत्ता ।
अवितहमेव जणाणं, परूवयंति त्ति लोगहिया ॥३२०॥
पञ्चास्तिकायमयं लोकं वरकेवलेन ज्ञात्वा ।
अवितथमेव जनानां प्ररूपयन्तीति लोकहिताः ॥ ३२० ॥

लोगो व जीवलोगो, सओ य परओ य अवायरक्खणओ ।
तस्सेगंतेण हिया, लोगहिया जिणवरा तेण ॥ ३२१ ॥
लोको वा जीवलोकः स्वतश्च परतश्चापायरक्षणतः ।
तस्यैकान्तेन हिता लोकहिता जिनवरास्तेन ॥ ३२१ ॥

लोकप्रदीपाः

तह ते लोगपईवा, जम्हा सन्निहियसव्वसत्ताणं ।
दीवेंति पईवा इव, जीवाइपयत्थवत्थुगणं ॥ ३२२ ॥
तथा ते लोकप्रदीपा यस्मात्सन्निहितसर्वसत्त्वानाम् ।
दीपयन्ति प्रदीपा इव जीवादिपदार्थवस्तुगणम् ॥ ३२२ ॥

अहवा संसयतामसमसेसमासन्नसन्निलोगस्स ।
अवणेंति मणगिहाओ, लोगपईवा तओ हुंति ॥३२३॥
अथवा संशयतामसमशेषमासन्नसंज्ञिलोकस्य ।
अपनयन्ति मनोगृहाल्लोकप्रदीपास्ततो भवन्ति ॥ ३२३ ॥

लोगो वि सुद्धबुद्धी, सम्मद्दिट्ठी विसेसओ तस्स ।
अइसुहुमे वि पयत्थे, पज्जोयंता सुजुत्तीहिं ॥ ३२४ ॥

लोकोऽपि शुद्धबुद्धिः सम्यग्दृष्टिर्विशेषतस्तस्य ।
अतिसूक्ष्मेऽपि पदार्थे प्रद्योतयन्तः सुयुक्तिभिः ॥ ३२४ ॥

लोय(ए)पज्जोयगरा, सूरा इव हुंति तेण तित्थयरा । लोकप्रद्योतकराख्यतुर्थी संपत्
संखेत्तविचित्तत्था, विन्नेया संपया एसा ॥ ३२५ ॥
लोके प्रद्योतकराः सूरा इव भवन्ति तेन तीर्थकराः ।
संक्षिप्तविचित्रार्था विज्ञेया संपदेषा ॥ ३२५ ॥

अभयाइपयत्थाणं, दायारो संपया य पंचमिया ।
पंचहिँ पएहिँ भणिया, अभयाइसरूवमेयं तु ॥३२६॥
अभयादिपदार्थानां दातारः संपच्च पञ्चमिका ।
पञ्चभिः पदैर्भणिताऽभयादिस्वरूपमेतत्तु ॥ ३२६ ॥

तिविहतिविहेण वहकरणविरईओ जेहिँ सव्वकालं पि । अभयदयाः
दिन्नमभयं जिणाणं, अभयदयाणं नमो ताणं॥३२७॥
त्रिविधत्रिविधेन वधकरणविरतितः यैः सर्वकालमपि ।
दत्तमभयं जिनेभ्योऽभयदयेभ्यो नमस्तेभ्यः ॥ ३२७ ॥

मोहंधो जंतुगणो, निम्मलसुयणाणचक्खुदाणेण । चक्षुर्दयाः
फुडदंसी जेहि कओ, चक्खुदयाणं नमो ताणं ॥३२८॥
मोहान्धो जन्तुगणो निर्मलश्रुतज्ञानचक्षुर्दानेन ।
स्फुटदर्शी यैः कृतः चक्षुर्दयेभ्यो नमस्तेभ्यः ॥ ३२८ ॥

अणुवकयपराणुग्गहपरेहि निव्वाणवरपुरीमग्गो । मार्गदयाः
भवरन्ने जेहि कओ, ते मग्गदया जओ सुत्तं ॥३२९॥
अनुपकृतपरानुग्रहपरैर्निर्वाणवरपुरीमार्गः ।
भवारण्ये यैः कृतस्ते मार्गदया यतः सूत्रम् ॥ ३२९ ॥

संम्मद्दंसणदिट्ठो, नाणेण य तेहि सुट्ठु उवलद्धो । निर्युक्तिः
चरण-करणेहि पहओ, नेव्वाणपहो जिणंदेहिं ॥३३०॥

१. इयं गाथा आवश्यके ९१० तमी.

सम्यग्दर्शनदृष्टो ज्ञानेन च तैः सुष्ठूपलब्धः ।
चरणकरणैः प्रहतो निर्वाणपथो जिनेन्द्रैः ॥ ३३० ॥

शरणदयाः

भवभीयाण जियाणं, सरणागयवच्छला जओ ताणं ।
होंति जिणेंदा नियमा, सरणदया तेण वुच्चंति ॥३३१॥
भवभीतानां जीवानां शरणागतवत्सला यतस्तेषाम् ।
भवन्ति जिनेन्द्रा नियमात् शरणदयास्तेनोच्यन्ते ॥३३१॥

बोधिदयाः पञ्चमी संपत्

बोही जिणेहि भणिया, भवंतरे सुद्धधम्मसंपत्ती ।
जिणसंथवेण लब्भइ, बोहिदया तेण वुच्चंति ॥३३२॥
बोधिर्जिनैर्भणिता भवान्तरे शुद्धधर्मसं(प्राप्तिः)पत्तिः ।
जिनसंस्तवेन लभ्यते बोधिदयास्तेनोच्यन्ते ॥ ३३२ ॥

अह छट्ठसंपयाए, धम्माईयाणि पंच उ पयाणि ।
धम्मो चरित्तधम्मो, किरियापरिणामरूवो सो ॥३३३
अथ षष्ठसंपदि धर्मादिकानि पञ्च तु पदानि ।
धर्मश्चारित्रधर्मः क्रियापरिणामरूपः सः ॥ ३३३ ॥

धर्मदयाः

दुविहो वि हु संपज्जइ, जम्हा जिणचलणसेवणरयाणं ।
गिज्जंति जाणएहिं, तम्हा ते तस्स दायारो ॥ ३३४ ॥
द्विविधोऽपि खलु संपद्यते यस्माज्जिनचरणसेवनरतानाम् ।
गीयन्ते ज्ञायकैस्तस्मात्ते तस्य दातारः ॥ ३३४ ॥

धर्मदेशकाः

परहियकरणेकरया, जहजोगं उवइसंति जं धम्मं ।
तो धम्मदेसया ते, तेसिं चिय मे नमो होउ ॥३३५॥
परहितकरणैकरता यथायोगमुपदिशन्ति यं धर्मम् ।
ततो धर्मदेशकास्ते तेभ्य एव मे नमो भवतु ॥ ३३५॥

धर्मनायकाः

सो पुण होइ विसिट्ठो, तेसिं आणाइ वट्टमाणाणं ।
धम्मस्स नायगाणं, तत्तो तेसिं मम पणामो ॥३३६॥

स पुनर्भवति विशिष्टस्तेषामाज्ञायां वर्त्तमानानाम् ।
धर्मस्य नायकेभ्यस्ततस्तेभ्यो मम प्रणामः ॥ ३३६ ॥

जह सारही सुकुसलो, तहा तहा खेडए रह-तुरंगे । धर्मसारथयः
जह नो होइ अवाओ, तुरंगमाणं रहस्सावि ॥३३७॥
यथा सारथिः सुकुशलस्तथा तथा खेटयति रथ-तुरङ्गान् ।
यथा नो भवत्यपायस्तुरङ्गमाणां रथस्याऽपि ॥ ३३७ ॥

एवं जिणुत्तमेहिं, वि उस्सग्ग-ऽववायपमुहजुत्तीहिं ।
एगंतहिओ धम्मो, उवइट्ठो धम्म-धम्मीणं ॥३३८॥
एवं जिनोत्तमैरप्युत्सर्गा-ऽपवादप्रमुखयुक्तिभिः ।
एकान्तहितो धर्म उपदिष्टो धर्म-धर्मिणाम् ॥ ३३८ ॥

इह धम्मो होइ रहो, तुरंगमा तस्स धारगा पुरिसा ।
उभयहियमुवइसंता,जिणनाहा धम्मसारहिणो॥३३९॥
इह धर्मो भवति रथस्तुरङ्गमास्तस्य धारकाः पुरुषाः ।
उभयहितमुपदिशन्तो जिननाथा धर्मसारथयः ॥ ३३९ ॥

धम्मवरचाउरंताइचक्कवट्टीणमेस खलु अत्थो । धर्मवरचातुरन्तचक्रवर्तिनः
इह चाउरंतसद्दो, भारहवासम्मि नायव्वो॥ ३४० ॥
धर्मवरचातुरन्तादिचक्रवर्त्तिनामेष खल्वर्थः ।
इह चातुरन्तशब्दो भारतवर्षे ज्ञातव्यः ॥ ३४० ॥

उत्तरओ हिमवंतो, पुव्वावरदाहिणा तओ अंता ।
लवणसमुद्दं पत्ता, तो भरहं चाउरंतमिणं ॥ ३४१ ॥
उत्तरतो हिमवान् पूर्वापरदक्षिणास्ततोऽन्ताः ।
लवणसमुद्रं प्राप्तास्ततो भरतं चातुरन्तमिदम् ॥ ३४१ ॥

एयस्स य भरहाई, अहिवइणो चक्कवट्टिणो हुंति ।
धम्मवरचाउरंते, तित्थयरा चक्कवट्टिसमा ॥ ३४२ ॥

एतस्य च भरतादेरधिपतयश्चक्रवर्तिनो भवन्ति ।
धर्मवरचातुरन्ते तीर्थकराश्चक्रवर्तिसमाः ॥ ३४२ ॥

अहवा चउदिसिधारं, चउरंतं चक्कमेव निद्दिट्ठं ।
दाण-तव-सील-भावणचउधारं धम्मचक्कमिणं ॥३४३॥
अथवा चतुर्दिग्धारं चतुरन्तं चक्रमेव निर्दिष्टम् ।
दान-तपः-शील-भावनाचतुर्धारं धर्मचक्रमिदम् ॥ ३४३ ॥

षष्ठी संपत्

चउगइअंतकरं ता, धम्मो वि हु चाउरंतचक्कसमो ।
वट्टंति तेण वरधम्मचक्कवट्टी जिणा तम्हा ॥ ३४४ ॥
चतुर्गत्यन्तकरं ततो धर्मोऽपि खलु चातुरन्तचक्रसमः ।
वर्तन्ते तेन वरधर्मचक्रवर्तिनो जिनास्तस्मात् ॥ ३४४ ॥

अप्रतिहतवर-ज्ञान-दर्शन-धराः

अप्पडिहयमक्खलियं, वरं पहाणं ति खाइगत्तेण ।
केवलियनाण-दंसणधराण एसो मम पणामो ॥३४५॥
अप्रतिहतमस्खलितं वरं प्रधानमिति क्षायिकत्वेन ।
केवलिकवरज्ञानदर्शनधरेभ्य एष मम प्रणामः ॥ ३४५ ॥

व्यावृत्तछद्मानः सप्तमी संपत्

विणियट्टं ति पणट्ठं, छउमं चउघाइकम्मरूवं तु ।
जेसिं तेसि नमो मे, सत्तमिया संपया दुपया ॥ ३४६
विनिवृत्तमिति प्रणष्टं छद्म चतुर्घातिकर्मरूपं तु ।
येभ्यस्तेभ्यो नमो मे सप्तमिका संपद्द्विपदा ॥ ३४६ ॥

शङ्का-समाधी

णणु अट्ठ वि कम्माइं, जिणाण नट्ठाइँ किं चउक्केण ? ।
सच्चं ओसरणत्थे,पडुच्च छउमक्खओ भणिओ ॥३४७॥
नन्वष्टापि कर्माणि जिनानां नष्टानि किं चतुष्केण ? ।
सत्यमवसरणार्थे प्रतीत्य छद्मक्षयो भणितः ॥ ३४७ ॥

जिन-आदिपदानि

रागद्दोसजयाओ, होंति जिणा जावया य अन्नेसिं ।
तिन्ना य भवसमुद्दं, अन्नेसिं तारया य जिणा ॥३४८॥
राग-द्वेषजयाद् भवन्ति जिना जापकाश्चान्येषाम् ।
तीर्णाश्च भवसमुद्रमन्येषां तारकाश्च जिनाः ॥ ३४८ ॥

बुद्धा अवगयतत्ता, अन्नेसिं वोहया य भगवंता । बुद्ध-प्रमुखप-दानि
कम्मट्ठबंधणाओ, मुक्का तह मोयगा चेव ॥ ३४९ ॥
बुद्धा अवगततत्त्वा अन्येषां बोधकाश्च भगवन्तः ।
कर्माष्टबन्धनान्मुक्तास्तथा मोचकाश्चैव ॥ ३४९ ॥

एसा चउपयमाणा, अट्ठमिया संपया उ वक्खाया । अष्टमी संपत्
नवमी तिपयपमाणा, सा सव्वन्नूणमिचाइ ॥ ३५० ॥
एषा चतुष्पदमानाऽष्टमिका संपत्तु व्याख्याता ।
नवमी त्रिपदप्रमाणा सा सर्वज्ञेभ्य इत्यादि ॥ ३५० ॥

तत्थ जिणा भगवंतो, सव्वं जाणंति तेण सव्वन्नू । सर्वज्ञाः सर्व-दर्शिनः
पासंति तेण सव्वं, तो सव्वदंसिणो हुंति ॥ ३५१ ॥
तत्र जिना भगवन्तः सर्वं जानन्ति तेन सर्वज्ञाः ।
पश्यन्ति तेन सर्वं ततः सर्वदर्शिनो भवन्ति ॥ ३५१ ॥

एगो एसालावो, बीओ सिवमयलमाइओ एत्थ ।
तइओ नमो जिणाणं, जियब्भयाणं तु नायव्वो ॥३५२॥
एक एष आलापो द्वितीयः शिवमचलमादिकोऽत्र ।
तृतीयो नमो जिनेभ्यो जितभयेभ्यस्तु ज्ञातव्यः ॥३५२॥

सिवमुवसग्गविउत्तं, सिद्धसरूवं पयं च सिद्धाणं । शिवम्–अच-लम्
साहाविय-पाओगियचलणाभावाओ तं अचलं॥३५३॥
शिवमुपसर्गवियुक्तं सिद्धस्वरूपं पदं च सिद्धानाम् ।
स्वाभाविक-प्रायोगिकचलनाभावात्तदचलम् ॥ ३५३ ॥

अरुयं रोगाभावा, अणंतनाणोवओगओऽणंतं । अरुजम्–अन-न्तम्–अक्षयम्
नासनिमित्ताभावा, नायव्वं अक्खयं तं तु ॥ ३५४ ॥
अरुजं रोगाभावादनन्तज्ञानोपयोगतोऽनन्तम् ।
नाशनिमित्ताऽभावाज्ज्ञातव्यमक्षयं तत्तु ॥ ३५४ ॥

अव्वाबाहं भणियं, वाबाहाकारिकम्मविरहाओ । अव्याबाधम्
देह-मणोगयवाबाहविरहियमाहारहीणत्ता ॥ ३५५ ॥

अव्याबाधं भणितं व्याबाधाकारिकर्मविरहात् ।
देह-मनोगतबाधाविरहितमाहारहीनत्वात् ॥ ३५५ ॥

अपुनरावृत्ति

नावत्तइ नागच्छइ, पुणो भवे तेण अपुणराविति ।
संसारहेउकम्माऽभावेण जओ इमं भणियं ॥ ३५६ ॥
नाऽऽवर्तते नागच्छति पुनर्भवे तेनाऽपुनरावृत्ति ।
संसारहेतुकर्माऽभावेन यत इदं भणितम् ॥ ३५६ ॥

सिद्धिगतिनामधेयम्

दड्ढम्मि जहा बीए, न होइ पुणरंकुरस्स उप्पत्ती ।
तह कम्मबीयनासे, पुणब्भवो नत्थि सिद्धाणं ॥३५७॥
दग्धे यथा बीजे न भवति पुनरङ्कुरस्योत्पत्तिः ।
तथा कर्मबीजनाशे पुनर्भवो नास्ति सिद्धानाम् ॥३५७॥

स्थानम्

सिज्झंति तत्थ जीवा, गम्मइ जीवेहिँ तेण सिद्धिगई ।
तं चेव नामधेयं, अभिहाणं तस्स ठाणस्स ॥३५८॥
सिध्यन्ति तत्र जीवा गम्यते जीवैस्तेन सिद्धिगतिः ।
तदेव नामधेयमभिधानं तस्य स्थानस्य ॥ ३५८ ॥

संप्राप्ताः

तं सम्मं पत्ताणं, कम्मखएणं ति एत्थ भावत्थो ।
इहरा वि जंति जम्हा, सुहुमा एगिंदिया तत्थ ॥३५९॥
तत्सम्यक् प्राप्तानां कर्मक्षयेणेत्यत्र भावार्थः ।
इतरथाऽपि यान्ति यस्मात्सूक्ष्मा एकेन्द्रियास्तत्र ॥३५९॥

नवमी संपत्

तइयपयं पयडत्थं, नमो जिणाणं जियब्भयाणं ति ।
निगमणवयणं एयं, पुणरुत्तं नेव मंतव्वं ॥ ३६० ॥

---

१. अनेन पद्येन सह तोल्यन्तु इदं पद्यम्—" दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे नारोहति भवाङ्कुरः " ॥—तत्त्वार्थ- दशमाध्यायेऽन्तिमसूत्रभाष्यप्रान्तभागेऽष्टमः श्लोकः । इदम् औपपातिकसूत्रगतं गद्यमपि अनेन प्राकृतश्लोकेन सह साधर्म्यं संश्रयते—" बीयाणं अग्गिदड्ढाणं पुणरवि अंकुरुप्पत्ती न भवइ, एवामेव सिद्धाणं कम्मबीए दड्ढे पुणरवि जम्मुप्पत्ती न भवइ"—( पृ० १११ ) तथा इयं गाथा २८६ तम-गाथयाऽपि समाना ।

तृतीयपदं प्रकटार्थं नमो जिनेभ्यो जितभयेभ्य इति ।
निगमनवचनमेतत्पुनरुक्तं नैव मन्तव्यम् ॥ ३६० ॥

एत्थं पुण बहुवयणं, पुरिसेगंतप्पवायनिम्महणं ।
सव्वेसिं पि जिणाणं, समगुणयाभावणनिमित्तं ॥३६१॥ बहुवचनहेतुः

अत्र पुनर्बहुवचनं पुरुषैकान्तप्रवादनिर्मथनम् ।
सर्वेषामपि जिनानां समगुणताभावननिमित्तम् ॥३६१॥

विसयबहुत्ते किरिया, भावुल्लासाओ बहुफला होइ ।
पणिवायदंडगोवरि, भन्नइ तम्हा इमा गाहा ॥३६२॥

विषयबहुत्वे क्रिया भावोल्लासाद्बहुफला भवति ।
प्रणिपातदण्डकोपरि भण्यते तस्मादियं गाथा ॥ ३६२ ॥

"जे[अ]अईआ सिद्धा" इत्यादि ॥

एयाए भावत्थं, सुगमं सम्मं मणम्मि भावेंतो ।
मण-वयण-कायसारं, करेज पंचंगपणिवायं ॥ ३६३ ॥

"ये [च]अतीताः सिद्धाः" इत्यादि ॥

एतस्या भावार्थं सुगमं सम्यग्मनसि भावयन् ।
मनो-वचन-कायसारं कुर्यात् पञ्चाङ्गप्रणिपातम् ॥ ३६३ ॥

उट्ठित्तु असंभंतो, तिविहं पायंतरं पमज्जित्ता ।
जिणमुद्दाट्ठियचलणो, इरियावहियं पडिक्कमइ ॥ ३६४ ईर्यापथिकीप्रतिक्रमणविधिः

उत्थायाऽसंभ्रान्तस्त्रिविधं पादान्तरं प्रमृज्य ।
जिनमुद्रास्थितचरण ईर्यापथिकीं प्रतिक्रामति ॥ ३६४ ॥

सन्निहियं भावगुरुं, आपुच्छित्ता खमासमण-पुव्वं ।
इरियं पडिक्कमेज्जा, ठवणाजिणसक्खियं इहरा ॥३६५॥

१. पूर्णमूलम्—जे अईआ सिद्धा जे अ भविस्संतिऽणागए काले ।
संपइ अ वट्टमाणा सव्वे तिविहेण वंदामि ॥
१

नामाइभेयभिन्नाऽवि, जिणवरा संभवंति अरहंता ।
भावारिहंतपडिवत्तिकारयं केवली-वयणं ॥ ५३४ ॥
नामादिभेदभिन्ना अपि जिनवराः संभवन्त्यर्हन्तः ।
भावार्हत्प्रतिपत्तिकारकं केवलि-वचनम् ॥ ५३४ ॥

एवं खलु अन्नोन्नं, कायवा चालणा पइट्ठा उ ।
बुद्धिनिउणेहि इहयं, दिसिमेत्तं दरिसियं एयं ॥५३५॥
एवं खलु अन्योन्यं कर्तव्या चालना प्रतिष्ठा तु ।
बुद्धिनिपुणैरिह दिङ्मात्रं दर्शितमेतत् ॥ ५३५ ॥

एसो संखेवेणं, पढमसिलोगस्स भासिओ अत्थो ।
वित्थरओ घेत्तवो, सिद्धंतमहानिहाणाओ ॥५३६॥
एष संक्षेपेण प्रथमश्लोकस्य भाषितोऽर्थः ।
विस्तरतो ग्रहीतव्यः सिद्धान्तमहानिधानात् ॥ ५३६ ॥

"उसभमजियं च" गाहा ॥ १ ॥
"ऋषभमजितं च" गाथा ॥ १ ॥

"सुविहिं च पुप्फदंतं" गाहा ॥ २ ॥
"सुविधिं च पुष्पदन्तं" गाथा ॥ २ ॥

"कुंथुं अरं च" गाहा ॥ ३ ॥ सूत्रम् ॥
"कुन्थुमरं च" गाथा ॥ ३ ॥ सूत्रम् ।

---

१. आवश्यकादितः

२. पूर्णमूलम्—

उसभमजिअं च वंदे संभवमभिणंदणं च सुमइं च ।
पउमप्पहं सुपासं जिणं च चंदप्पहं वंदे ॥ २ ॥

३. सुविहिं च पुप्फदंतं सीअल-सिज्जंस-वासुपुज्जं च ।
विमलमणंतं च जिणं धम्मं संतिं च वंदामि ॥ ३ ॥

४. कुंथुं अरं च मल्लिं वंदे मुणिसुव्वयं नमिजिणं च ।
वंदामिऽरिट्ठनेमिं पासं तह वद्धमाणं च ॥ ४ ॥

अट्ठट्ठ उ नामाइं, भणियाइं एक्कमेक्कगाहाए।
चउवीसत्थयसुत्ते, चउवीसाए जिणवराणं ॥५३७॥

अष्टाष्ट तु नामानि भणितानि एकैकगाथायाम्।
चतुर्विंशतिस्तवसूत्रे चतुर्विंशतेर्जिनवराणाम् ॥ ५३७ ॥

पौनरुक्त्यपरिहारः

जं पुण वंदइ किरिया-भणणं सुत्ते पुणो पुणो एत्थ।
आयरपगासगत्ता, पुणरुत्तं तं न दोसगरं ॥ ५३८ ॥

यत् पुनर् 'वन्दते' क्रिया-भणनं सूत्रे पुनः पुनरत्र।
आदरप्रकाशकत्वात् पुनरुक्तं तन्न दोषकरम् ॥ ५३८ ॥

कानि तीर्थकराणां नाम्नां कारणानि? तदर्थाश्च के?

एएसिं नामाणं, जे अत्था कारणाइं जाइं वा।
इच्छामि नाउमेयं, पुच्छइ सीसो गुरू आह ॥५३९॥

एतेषां नाम्नां येऽर्थाः कारणानि यानि वा।
इच्छामि ज्ञातुमेतत् पृच्छति शिष्यो गुरुराह ॥ ५३९ ॥

ऋषभसामान्यार्थः

उसहो पहाणवसहो, दुव्वहभरवहणपच्चलो होइ।
इय दुव्वहधम्मधुरावहणखमो तो जिणो उसहो ॥५४०॥

ऋषभः प्रधानवृषभो दुर्वहभरवहनप्रत्यलो भवति।
इति दुर्वहधर्मधुरावहनक्षमस्ततो जिन ऋषभः ॥ ५४० ॥

जइ वा वसो ति धम्मो, भावइ दढं तेण तो भवे वसभो।
जइ एवं सव्वे वि हु, वसहा किर किं न भन्नंति? ॥५४१

यदि वा वृष इति धर्मः, भावयति दढं तेन ततो भवेद् वृषभः।
यद्येवं सर्वेऽपि खलु वृषभाः किल किं न भण्यन्ते? ॥५४१॥

ऋषभविशेषार्थः

सच्चमिणं किंतु फुडं, अन्नं पि हु एत्थ कारणं अत्थि।
एयस्से ऊरुजुयले, तवियसुवन्नुज्जलं धवलं ॥ ५४२ ॥

---

१. यानि चात्र तीर्थंकरनामप्रदानकारणानि दर्शितानि तानि सर्वाण्येव श्रीआवश्यके क्वचित् प्रकारान्तरेण सव्याख्यानानि १०८०-१०९१ गाथासु सुस्पष्टितानि—आवश्यके (पृ. ५०२-५०६)

सत्यमिदं किंतु स्फुटमन्यदपि खल्वत्र कारणमस्ति ।
एतस्योरुयुगले तप्तसुवर्णोज्ज्वलं धवलम् ॥ ५४२ ॥

अन्नोन्नाभिमुहं किर, वसहजुगं लंछणं रुइरमासि ।
सुमिणम्मि पढमपुसभो, चोद्दससुमिणाण मज्झम्मि ५४३

अन्योन्याभिमुखं किल वृषभयुगं लाञ्छनं रुचिरमासीत् ।
स्वप्ने प्रथमवृषभश्चतुर्दशस्वप्नानां मध्ये ॥ ५४३ ॥

दिट्ठो मरुदेवीए, तेण कयं उसहनाममेयस्स ।
तुट्ठेणाऽमरवइणा, अन्नेसिं पुण ठिई एसा ॥५४४॥

दृष्टो मरुदेव्या तेन कृतमृषभनामैतस्य ।
तुष्टेनाऽमरपतिना अन्येषां पुनः स्थितिरेषा ॥ ५४४ ॥

गय-वसह-सीह-अभिसेय-दाम-ससि-दिणयरं ज्झयं कुंभं ।
पउमसर-सागर-विमाण-भवण-रयणुचय-सिहिं च ॥५४५॥

गज-वृषभ-सिंह-अभिषेक-दाम-शशि-दिनकरं ध्वजं कुम्भम् ।
पद्मसरः-सागर-विमान-भवन-रत्नोच्चय-शिखिनं च ॥५४५॥

परिवाडीइ इमाए, जणणीओ सुमिणयाइँ पेच्छंति ।
गब्भावयारसमए, तित्थंकर—चक्कवट्टीणं ॥ ५४६ ॥

परिपाट्याऽनया जनन्यः स्वप्नान् प्रेक्षन्ते ।
गर्भावतारसमये तीर्थंकर-चक्रवर्तिनोः ॥ ५४६ ॥

इंदिय-विसय-कसायाइएहिँ घोरंतरंगवेरीहिं । अजितसामान्यार्थः
न जिओ मणयं पि जओ, भन्नइ अजिओ जिणो तेण ५४७

इन्द्रिय-विषय-कषायादिकैर्घोरान्तरङ्गवैरिभिः ।
न जितो मनागपि यतो भण्यतेऽजितो जिनस्तेन ॥ ५४७ ॥

अन्ने वि तेहि न जिया, अजिया तो ते वि किं न उच्चंति? ।
भन्नइ विसेसकारणमयं पि हु भगवओ अत्थि ॥ ५४८ ॥

अन्येऽपि तैर्न जिता अजितास्ततस्तेऽपि किं नोच्यन्ते ?।
भण्यते विशेषकारणमन्यदपि खलु भगवतोऽस्ति ॥५४८॥

अजितविशेषार्थः

जियसत्तुनिवेण समं, कीलंती अक्खजूयकीलाए ।
न कयाइ जयं पत्ता, विजया देवी पुरा काले ॥५४९॥

जितशत्रुनृपेण समं क्रीडन्ती अक्षद्यूतक्रीडायाम् ।
न कदाचिद् जयं प्राप्ता विजया देवी पुरा काले ॥५४९॥

गब्भगए भगवंते, न जिया ईसिं पि सा नरिंदेण ।
जायस्स तेण पिउणा, अजिओ त्ति पइट्ठियं नाम ॥ ५५० ॥

गर्भगते भगवति न जिता ईषदपि सा नरेन्द्रेण ।
जातस्य तेन पित्रा 'अजितः' इति प्रतिष्ठितं नाम ॥५५०॥

शंभवसामान्यार्थः

सं सोक्खं ति पवुच्चइ, दिट्ठे तं होइ सबजीवाणं ।
तो संभवो जिणेसो, सबे वि हु संभवा एवं ॥५५१॥

शं सौख्यमिति प्रोच्यते दृष्टे तद् भवति सर्वजीवानाम् ।
ततः शंभवो जिनेशः सर्वेऽपि खलु शंभवा एवम् ॥५५१॥

शंभवविशेषार्थः

भन्नंति भुवणगुरुणो, नवरं अन्नं पि कारणं अत्थि ।
सावत्थीनयरीए, कयाइ कालस्स दोसेण ॥ ५५२ ॥

भण्यन्ते भुवनगुरवः, नवरमन्यदपि कारणमस्ति ।
श्रावस्तीनगर्यां कदाचित् कालस्य दोषेण ॥ ५५२ ॥

जाए दुब्भिक्खभरे, दुत्थीभूए जणे समत्थे वि ।
अवयरिओ एस जिणो, सेणादेवीए उयरम्मि॥५५३॥

जाते दुर्भिक्षभरे दुःस्थीभूते जने समस्तेऽपि ।
अवतीर्ण एष जिनः सेनादेव्या उदरे ॥ ५५३ ॥

सयमेवागम्म सुराहिवेण संपूइया तओ जणणी ।
वद्धाविया य भुवणेक्कभाणुतणयस्स लाभेणं ॥५५४॥

स्वयमेवाऽऽगम्य सुराधिपेन संपूजिता ततो जननी ।
वर्धिता (वर्धापिता) च भुवनैकभानुतनयस्य लाभेन॥५५४॥

तद्दियहं चिय सहसा, समत्थसत्थेहि धन्नपुन्नेहिं ।
सव्वत्तो इंतेहिं, सुहं सुभिक्खं तहिं जायं ॥ ५५५ ॥

तद्दिवसादेव सहसा समर्थसार्थैर्धान्यपूर्णैः ।
सर्वत आयद्भिः सुखं सुभिक्षं तत्र जातम् ॥ ५५५ ॥

संभवियाइं जम्हा, समत्तसस्साइं संभवे तस्स ।
तो संभवो त्ति नामं, पइट्ठियं जणणि जणएहिं ॥५५६॥

संभूतानि यस्मात् समस्तसस्यानि संभवे तस्य ।
ततः संभव इति नाम प्रतिष्ठितं जननी-जनकाभ्याम् ॥५५६॥

अभिणंदइ आणंदइ, रूवाइगुणेहि तिहुयणं सयलं । अभिनंदनसामान्यार्थः
अभिणंदणो जिणो तो, अन्नं पि हु कारणं बीयं॥५५७॥

अभिनन्दति आनन्दति रूपादिगुणैस्त्रिभुवनं सकलम् ।
अभिनन्दनो जिनस्ततोऽन्यदपि खलु कारणं द्वितीयम् ॥

गब्भगए तम्मि जओ, जणणीमच्चंतभत्तिसंजुत्तो । अभिनन्दनविशेषार्थः
अभिनंदइ अभिक्खं, सक्को अभिणंदणो तेण ॥५५८॥

गर्भगते तस्मिन् यतो जननीमत्यन्तभक्तिसंयुक्तः ।
अभिनन्दत्यभीक्ष्णं शक्रोऽभिनन्दनस्तेन ॥ ५५८ ॥

पावायारनिमित्ता, मोक्खाभिमुहा सुहा मई जस्स । सुमतिसामान्यार्थः
सो सुमई तित्थयरो, जइ एवं सुमइणो सव्वे ॥५५९॥

पापाचारनिमित्ता मोक्षाभिमुखा शुभा मतिर्यस्य ।
स सुमतिस्तीर्थकरो यद्येवं सुमतयः सर्वे ॥ ५५९ ॥

एत्थ विसेसकारणं—

अचिरागयवणिमरणे, दोण्ह सवत्तीण दारओ एगो । सुमतिविशेषार्थः
बालगहग्गह दोण्ह वि, ववहारो मेहनिवपुरओ॥५६०॥

अत्र विशेषकारणम्—

अचिरागतवणिग्मरणे द्वयोः सपत्न्योर्दारक एकः ।
बालग्रहाग्रहो द्वयोरपि व्यवहारो मेघनृपपुरतः ॥ ५६० ॥

रन्नो चिंताइसओ सगे-यरा कहमिमीण विन्नेया ?
चिंताकारणपुच्छा, देवीए राइणो कहियं ॥ ५६१ ॥
राज्ञश्चिन्तातिशयः स्वके-तरा कथमनयोर्विज्ञेया ।
चिन्ताकारणपृच्छा देव्या राज्ञः कथितम् ॥ ५६१ ॥

तीएँ भणियाओ ताओ, पुत्तं वित्तं च कुणह दोभाए ।
पडिवन्नममायाए, मायाए जंपियं देवि ! ॥ ५६२ ॥
तया भणिते ते पुत्रं वित्तं च कुरुत द्विभागे ।
प्रतिपन्नममात्रा मात्रा कथितं देवि ! ॥ ५६२ ॥

मा माऽऽणवेसु एवं, दव्वं सव्वं पि देहि एयाए ।
अप्पेहि मज्झ पुत्तं, जीवंतं जेण पेच्छामि ॥ ५६३ ॥
मा माऽऽज्ञापय एवं द्रव्यं सर्वमपि देहि एतस्यै ।
अर्पय मम पुत्रं जीवन्तं येन प्रेक्षे ॥ ५६३ ॥

एसा सग त्ति नाउं, पुत्तो वित्तं च तीइ दिन्नाई ।
निद्धाडिया य इयरी, रन्ना अलिय त्ति कुविएण ॥ ५६४ ॥
एषा स्वकेति ज्ञात्वा पुत्रो वित्तं च तस्यै दत्तानि ।
निर्धाटिता चेतरा राज्ञाऽलीकेति कुपितेन ॥ ५६४ ॥

गब्भगए जं जाया, मंगलदेवीएँ एरिसा सुमई ।
तुट्ठेण तत्तो रन्ना, जिणस्स सुमई कयं नामं ॥ ५६५ ॥
गर्भगते यद् जाता मङ्गलदेव्या एतादृशी सुमतिः ।
तुष्टेन ततो राज्ञा जिनस्य सुमतिः कृतं नाम ॥ ५६५ ॥

पद्मप्रभसामान्यार्थः पउमं बहुप्पयारं, तहवि हु रत्तुप्पलं इहं पगयं ।
तस्सारिसी जस्स पहा, सो खलु पउमप्पहो अरहा ॥ ५६६ ॥

पद्मं बहुप्रकारं तथाऽपि खलु रक्तोत्पलमिह प्रगतम् ।
तत्सदृशी यस्य प्रभा स खलु पद्मप्रभोऽर्हन् ॥ ५६६ ॥

जइ वि इह वासुपुज्जो, एरिसवन्नो तहाऽवि हु विसेसो । पद्मप्रभविशेषार्थः
पउमसयणम्मि जणणीएँ डोहलो तेण पउमाभो ५६७
यद्यपि इह वासुपूज्य एतादृशवर्णस्तथाऽपि खलु विशेषः ।
पद्मशयने जनन्या दोहदस्तेन पद्माभः ॥ ५६७ ॥

पासा देहविभागा, सुसोहणा जस्स सो खलु सुपासो । सुपार्श्वसामान्यार्थः
सव्वे वि एरिस च्चिय, एत्थ वि हेऊ इमो अन्नो ॥५६८
पार्श्वानि देहविभागाः सुशोभना यस्य स खलु सुपार्श्वः ।
सर्वेऽप्येतादृशा एवात्राऽपि हेतुरयमन्यः ॥ ५६८ ॥

गब्भगए जं जणणी, जायसुपासा तओ सुपासजिणो । सुपार्श्वविशेषार्थः
चंदसमा देहपहा, जस्स उ चंदप्पहो सो उ ॥ ५६९ ॥ चन्द्रप्रभसामान्यार्थः
गर्भगते यद् जननी जातसुपार्श्वा ततः सुपार्श्वजिनः ।
चन्द्रसमा देहप्रभा यस्य तु चन्द्रप्रभः स तु ॥ ५६९ ॥

सुविहिजिणो वि हु एवंविहो त्ति भन्नइ विसेसहेऊ तो । चन्द्रप्रभविशेषार्थः
चंदपियणम्मि जणणीएँ डोहलो तेण चंदाभो ॥५७०॥
सुविधिजिनोऽपि खल्वेवंविध इति भण्यते विशेषहेतुस्ततः ।
चन्द्रपाने जनन्या दोहदस्तेन चन्द्राभः ॥ ५७० ॥

सुविहिं च पुप्फदंतं, सुविही नामं विसेसणं बीयं । सुविधिसामान्यार्थः
तत्थऽवि विही विहाणं, किरिया सा सोहणा जस्स५७१
सुविधिं च पुष्पदन्तं सुविधिर्नाम विशेषणं द्वितीयम् ।
तत्राऽपि विधिर्विधानं क्रिया सा शोभना यस्य ॥५७१ ॥

सो सुविही नामसत्थो, कारणमेयस्स जेण से जणणी । सुविधिविशेषार्थः
सव्वविहीसु वि कुसला, गब्भगए तेण सुविहिजिणो५७२
स सुविधिर्नामसार्थः(नस्तः) कारणमेतस्य येन तस्य जननी।
सर्वविधिष्वपि कुशला गर्भगते तेन सुविधिजिनः ॥५७२॥

[illegible]

सुंदरगुणाणुरूवा, दंता जं तस्स पुप्फदंतो तो ।
अन्ने एयं नामं, सुविहिं च विसेसणं देंति ॥ ५७३ ॥

सुन्दरगुणानुरूपा दन्ता यस्मात् पुष्पदन्तस्ततः ।
अन्ये एतन्नाम सुविधिं च विशेषणं ददति ॥ ५७३ ॥

शीतलनामा-न्वर्थः

सीयलवयणो लेसाएँ, सीयलो तेण सीयलो भयवं ।
सव्वे वि एरिस च्चिय, विसेसहेऊ इमस्सेसो ॥५७४॥

शीतलवच(द)नो लेश्यया शीतलस्तेन शीतलो भगवान् ।
सर्वेऽपि एतादृशा एव विशेषहेतुरस्यैषः ॥ ५७४ ॥

शीतलविशे-षार्थः

गब्भट्ठिए जिणिंदे, जणणीहत्थेण फुसियदेहस्स ।
पिउणो दाहोवसमो, संजाओ सीयलो तेण ॥ ५७५ ॥

गर्भस्थिते जिनेन्द्रे जननीहस्तेन स्पृष्टदेहस्य ।
पितुर्दाहोपशमः संजातः शीतलस्तेन ॥ ५७५ ॥

श्रेयांसनामा-न्वर्थः

सेया पसंसणिज्जा, अंसा देहस्स अवयवा जस्स ।
सो सेज्जंसो भन्नइ, एसो अन्नो वि पज्जाओ ॥५७६॥

श्रेयांसः(श्रेताः) प्रशंसनीया अंशा देहस्य अवयवा यस्य ।
स श्रेयांसो भण्यते एष अन्योऽपि पर्यायः ॥ ५७६ ॥

श्रेयांसविशे-षार्थः

महरिहसेज्जारुहणम्मि डोहलो आसि जेण जणणीए ।
गब्भगए भगवंते, सा किर सेज्जा अपरिभोगा ॥५७७॥

महार्हशय्यारोहणे दोहद आसीद् येन जनन्याः ।
गर्भगते भगवति सा किल शय्या अपरिभोगा ॥५७७॥

कुलदेवयाणुभावा, न सहइ सयणंतरस्स अन्नस्स ।
तत्थ य सुत्ता देवी, सहसा कुलदेवया नट्ठा ॥५७८॥

कुलदेवतानुभावाद् न सहते स्वजनान्तरस्यान्यस्य ।
तत्र च सुप्ता देवी सहसा कुलदेवता नष्टा ॥ ५७८ ॥

तुट्ठेण तओ पिउणा, सेजं(ज्जं)सो एस जिणवरो भणिओ ।
तह होइ वासुपुज्जो, वसुपुज्जनिवस्स जमवच्चं ॥५७९॥

वासुपूज्यः

तुष्टेन ततः पित्रा श्रेयांस एष जिनवरो भणितः ।
तथा भवति वासुपूज्यो वसुपूज्यनृपस्य यदपत्यम् ॥ ५७९॥

ग्या—

पूएइ वासवो जं जणणिं गब्भट्ठियम्मि जिणनाहे ।
आणंदनिब्भरमणो, वत्थाहरणेहिं अणवरयं ॥ ५८०॥

भवा—

पूजयति वासवो यद् जननीं गर्भस्थिते जिननाथे ।
आनन्दनिर्भरमना वस्त्राभरणैरनवरतम् ॥ ५८० ॥

तम्हा तिलोयपहुणो, पिउणा तुट्ठेण सयणपच्चक्खं ।
नामं पि वासुपुज्जो, पइट्ठियं भुवणसुपसिद्धं ॥ ५८१ ॥

तस्मात् त्रिलोकप्रभोः पित्रा तुष्टेन स्वजनप्रत्यक्षम् ।
नामाऽपि वासुपूज्यः प्रतिष्ठितं भुवनसुप्रसिद्धम् ॥५८१॥

अंगमलं कम्ममलं, विगयं दुविहं मलं जिणिंदस्स । विमलनामा-
विमलो त्ति तेण वुच्चइ,सव्वे वि हु किं न तो विमला? ५८२ भ्यार्थः

अङ्गमलः कर्ममलो विगतो द्विविधो मलो जिनेन्द्रस्य ।
विमल इति तेनोच्यते सर्वेऽपि खलु किं न ततो विमलाः?॥

अत्थि विसेसनिमित्तं, जह भणियं सुमइनाममायाए । विमलविरो-
पुत्तविवाए महिलादुगस्स नवरं अह विसेसो ॥५८३॥ धार्थः

अस्ति विशेषनिमित्तं यथा भणितं सुमतिनाममातुः ।
पुत्रविवादे महिलाद्विकस्य नवरमथ विशेषः ॥ ५८३ ॥

रायंगणम्मि चिट्ठइ, एसो अहिणवसमुग्गओ भूओ ।
पुत्तो य मज्झ उदरे, अत्थि महाबुद्धिसंपन्नो ॥५८४॥

राजाङ्गणे तिष्ठति एष अभिनवसमुद्गको(तो) भूतः ।
पुत्रश्च ममोदरेऽस्ति महाबुद्धिसंपन्नः ॥ ५८४ ॥

एसो जोव्वणपत्तो, इमस्स वरपायवस्स छायाए ।
एयं तुम्ह विवायं, छिंदिस्सइ नेत्थ संदेहो ॥ ५८५॥

१ मुद्गरादस्य समुद्गकः, मेसोदयः, अभेदयः इत्यपि.

एष यौवनप्राप्तोऽस्य वरपादपस्य छायायाम् ।
एवं तव विवादं छेत्स्यति नाऽत्र संदेहः ॥ ५८५ ॥

तन्नियमेत्तं कालं, ता चिट्ठह ताव निब्भुया तुब्भे ।
पडिवन्नममायाए, माया न खमइ मुहुत्तं पि ॥५८६॥
तावन्मात्रं कालं ततः तिष्ठत तावत् निभृता यूयम् ।
प्रतिपन्नममातृकया माता न क्षमते मुहूर्तमपि ॥ ५८६ ॥

भणइ य फिट्टइ गेहं, एवं दुण्ह वि विभिन्नचित्ताणं ।
जं वा तं वादाओ अप्पिज्जइ देवि! मम पुत्तो ॥५८७॥
भणति च स्फेटयति गेहमेवं द्वयोरपि विभिन्नचित्तयोः ।
यद् वा तद् वादादर्प्यते देवि! मम पुत्रः ॥ ५८७ ॥

नियमइ कोसल्लेणं, सामा नाऊण तासि परमत्थं ।
छिंदइ तं ववहारं, पुव्वुत्तकमेण नीसेसं ॥ ५८८ ॥
नियमयति कौशलेन श्यामा ज्ञात्वा तयोः परमार्थम् ।
छिनत्ति तं व्यवहारं पूर्वोक्तक्रमेण निःशेषम् ॥ ५८८ ॥

एवं विमलं बुद्धिं, कयवम्मनराहिवेण नाऊण ।
एसो गब्भपभावो, सुयस्स विमलो कयं नाम ॥५८९॥
एवं विमलां बुद्धिं कृतवर्मनराधिपेन ज्ञात्वा ।
एष गर्भप्रभावः सुतस्य विमलः कृतं नाम ॥ ५८९ ॥

अनन्तसामान्यार्थः

नाणं जेण अणंतं, बलं च विरियं च सासयसुहं च ।
तेण जिणिंदोऽणंतो(नऽन्नो), अन्नं पि हु कारणं अत्थि५९०
ज्ञानं येन अनन्तं बलं च वीर्यं च शाश्वतसुखं च ।
तेन जिनेन्द्रोऽनन्तो(नान्यो)ऽन्यदपि खलु कारणमस्ति ५९०

अनन्तविशेषार्थः

जम्हाऽवयारसमए, जएक्कनाहस्स दिट्ठमंबाए ।
रयणविचित्तमणंतं, दामं सुमिणे तओऽणंतो ॥५९१॥
यस्मादवतारसमये जगदेकनाथस्य दृष्टमम्बया ।
रत्नविचित्रमनन्तं दाम स्वप्ने ततोऽनन्तः ॥ ५९१ ॥

धम्मफलभूयरूवाइगुणगणो धम्मदेसओ सो सो ।
पच्चक्खो धम्मो इव, भन्नइ धम्मो जिणो तेण ॥५९२॥ धर्मसामान्यार्थः

धर्मफलभूतरूपादिगुणगणो धर्मदेशकः स सः ।
प्रत्यक्षो धर्म इव भण्यते धर्मो जिनस्तेन ॥ ५९२ ॥

अहवा—

अहिओ धम्मुच्छाहो, जाओ जणणीए तम्मि उअरत्थे। धर्मविशेषार्थः
तुट्ठेण तेण पिउणा, जिणस्स धम्मो कयं नाम ॥५९३॥

अथवा—

अधिको धर्मोत्साहो जातो जनन्याः तस्मिन्नुदरस्थे ।
तुष्टेन तेन पित्रा जिनस्य धर्मः कृतं नाम ॥ ५९३ ॥

संती पसमो भन्नइ, अवइरित्तो य तीए तो सन्ती । शान्तिसामान्यार्थः
रागद्दोसविउत्तो, भावत्थो होइ एयस्स ॥ ५९४ ॥

शान्तिः प्रशमो भण्यतेऽव्यतिरिक्तश्च तया ततः शान्तिः।
रागद्वेषवियुक्तो भावार्थो भवत्येतस्य ॥ ५९४ ॥

अन्नं पि एत्थ कारणमिमस्स नामस्स गयउरे नयरे । शान्तिविशेषार्थः
जायं महंतमसिवं, खुद्दसुरकोवदोसेण ॥ ५९५ ॥

अन्यदप्यत्र कारणमस्य नाम्नो गजपुरे नगरे ।
जातं महदशिवं क्षुद्रसुरकोपदोषेण ॥ ५९५ ॥

अइरादेवीउयरे, अवयरिए सोलसम्मि तित्थयरे ।
असिवं ज्झत्ति पणट्ठं, तिमिरं व समुग्गए सूरे ॥५९६॥

अचिरादेव्युदरेऽवतीर्णे षोडशे तीर्थकरे ।
अशिवं झटिति प्रणष्टं तिमिरमिव समुद्गते सूर्ये ॥५९६॥

जाया पुरम्मि संती, तत्तो तुट्ठेण वीससेणेणं ।
संति त्ति कयं नामं, तिलोयचूडामणिजिणस्स ॥५९७॥

जाता पुरे शान्तिः ततस्तुष्टेन विश्वसेनेन ।
शान्तिरिति कृतं नाम त्रिलोकचूडामणिजिनस्य ॥५९७॥

कुन्थुः

रयणमयमहाथूभं, दट्ठूण घरंगणागयं सुमिणे ।
जं पडिबुद्धा देवी सुयस्स कुंथु कयं नाम ॥ ५९८ ॥
रत्नमयमहास्तूपं दृष्ट्वा गृहाङ्गणागतं स्वप्ने ।
यत् प्रतिबुद्धा देवी सुतस्य कुन्थुः कृतं नाम ॥ ५९८ ॥

अरसामान्यार्थः

नो राइ नो पयंच्छइ, सावं वाऽणुग्गहं च जीवाणं ।
राग-दोसविउत्तो, होइ जिणंदो अरो तेण ॥ ५९९ ॥
नो राति नो प्रयच्छति शापं वाऽनुग्रहं च जीवानाम् ।
राग-द्वेषवियुक्तो भवति जिनेन्द्रोऽरस्तेन ॥ ५९९ ॥

अहवा—

अरविशेषार्थः

उत्तमरहंगजोगो, लद्धो सुमहारिओ अरो सुविणे ।
जणणीए तेण कयं, अरो त्ति नामं जिणेंदस्स ॥६००॥

अथवा—

उत्तमरथाङ्गयोगो लब्धः सुमहार्होऽरः स्वप्ने ।
जनन्या तेन कृतमर इति नाम जिनेन्द्रस्य ॥ ६०० ॥

मल्लिसामान्यार्थः

मोहाइमल्लमहणो, विज्जइ मल्लो परिग्गहे जम्हा ।
सुकज्झाणऽभिहाणो, मन्नइ तम्हा जिणो मल्ली ॥६०१
मोहादिमल्लमथनो विद्यते मल्लः परिग्रहे यस्मात् ।
शुक्लध्यानाभिधानो मन्यते तस्माद् जिनो मल्लिः ॥६०१॥

अन्नं च—

मल्लिविशेषार्थः

कुच्छिगए जिणनाहे, देवीएँ पभावईएँ उप्पन्नो ।
वरसुरहिमल्लसयणम्मि डोहलो तेण मल्लिजिणो ॥६०२

अन्यच्च—

कुक्षिगते जिननाथे देव्याः प्रभावत्या उत्पन्नः ।
वरसुरभिमाल्यशयने दोहदस्तेन मल्लिजिनः ॥ ६०२ ॥

मुनिसुव्रतसामान्यार्थः

मुणइ तिकालावत्थं, जयस्स जं सो मवे मुणी तेण ।
सोहणवएहिं जुत्तो, त्ति सुव्वओ पयदुगं नामं ॥६०३॥

जानाति त्रिकालावस्थां जगतो यत् स भवेद् मुनिस्तेन ।
शोभनव्रतैर्युक्त इति सुव्रतः पदद्विकं नाम ॥ ६०३ ॥

जइ वि हु सव्वे एवंविह त्ति तह वि हु इमम्मि गब्भगए। मुनिसुव्रतविशेषार्थः
जाया जणणी जं सुव्वय त्ति मुनिसुव्वओ तम्हा ॥ ६०४ ॥
यद्यपि खलु सर्वे एवंविधा इति तथाऽपि खल्वस्मिन् गर्भगते ।
जाता जननी यत् सुव्रता इति मुनिसुव्रतस्तस्मात् ॥६०४॥

उत्तमगुणगणगरुयत्तणेण नमिया सुरासुरा जम्हा । नमिसामान्यार्थः
चलणेसु भुवणगुरुणो, तेण नमी भन्नए भयवं ॥६०५
उत्तमगुणगणगुरुकत्वेन नताः सुराऽसुरा यस्मात् ।
चरणयोर्भुवनगुरोस्तेन नमिर्भण्यते भगवान् ॥ ६०५ ॥

तह वि विसेसनिमित्तं, विजयनरेंदस्स मंदिरे सोउं । नमिविशेषार्थः
विबुहनिवहेहि विहियं, सुयजम्ममहामहं रम्मं ॥६०६
तथाऽपि विशेषनिमित्तं विजयनरेन्द्रस्य मन्दिरे श्रुत्वा ।
विबुधनिवहैर्विहितं सुतजन्ममहामहं रम्यम् ॥ ६०६ ॥

ईसा-मच्छरगरुयत्तणेण आगामिपरिभवभयाओ ।
रुद्धा पच्चंतियपत्थिवेहि तुरियं पुरीमहिला ॥ ६०७ ॥
ईर्ष्या-मत्सरगुरुकत्वेन आगामिपरिभवभयात् ।
रुद्धा प्रत्यन्तिकपार्थिवैस्त्वरितं पुरीमिथिला ॥ ६०७ ॥

वड्ढियचिंते लोए, विजयनरिंदम्मि वाउलीभूए ।
मूढम्मि मंतिवग्गे, अइघोरे कोट्टरोहम्मि ॥ ६०८ ॥
वृद्धचिन्ते लोके विजयनरेन्द्रे व्याकुलीभूते ।
मूढे मन्त्रिवर्गे अतिघोरे कोट्टरोहे (धे) ॥ ६०८ ॥

चिंतइ वप्पाएवी, सुरवइमहियस्स मज्झ तणयस्स ।
मज्झण्हदिणयरस्स व, तेयं विसहंति कह रिउणो?॥६०९
चिन्तयति वप्रादेवी सुरपतिमहितस्य मम तनयस्य ।
मध्याह्नदिनकरस्येव तेजो विषहन्ते कथं रिपवः? ॥६०९॥

तम्हा दंसेमि इमं, गोसे सवेसि दुट्टराईणं ।
पणमंति पलायंति व, सयराहं जेण सवे वि ॥६१०॥

तस्माद् दर्शयामीमं गोपे सर्वेषां दुष्टराजानाम् ।
प्रणमन्ति पलायन्ते वा शीघ्रं येन सर्वेऽपि ॥ ६१० ॥

मग्गाणुसारिपरिणामियाएँ बुद्धीए भाविऊणेवं ।
उच्छंगधरियबाला, सूरुदए सालमारूढा ॥ ६११ ॥

मार्गानुसारिपारिणामिक्या बुद्ध्या भावयित्वैवम् ।
उत्सङ्गधृतबाला सूर्योदये शालमारूढा ॥ ६११ ॥

दट्ठूण जिणवरेंदं, रायाणो माण-मच्छरविउत्ता ।
पणमंति पणयसारं, सेवगभावं पवन्नंति ॥ ६१२ ॥

दृष्ट्वा जिनवरेन्द्रं राजानो मान-मत्सरवियुक्ताः ।
प्रणमन्ति प्रणत(य)सारं सेवकभावं प्रपन्नयन्ति ॥६१२॥

जं नमिया सयलनिवा, जिणस्स अच्चंतबलसमुन्नद्धा ।
तेण विजएण रन्ना, नमि त्ति नामं विणिम्मवियं ६१३

यद् नताः सकलनृपा जिनस्यात्यन्तबलसमुन्नद्धाः ।
तेन विजयेन राज्ञा 'नमिः' इति नाम विनिर्मापितम् ॥

अरिष्टनेमिसामान्यार्थः

भन्नइ अरिट्ठमसुहं, नेमी चक्काउहस्स खलु धारा ।
असुहस्स नेमिभूओ, अरिट्ठनेमी जिणो तेण ॥६१४॥

भण्यतेऽरिष्टमसुखं नेमिश्चक्रायुधस्य खलु धारा ।
अशुभस्य नेमिभूतोऽरिष्टनेमिर्जिनस्तेन ॥ ६१४ ॥

अरिष्टनेमिविशेषार्थः

अहवा सिवादेवीए, दिट्ठं सुमिणम्मि तुट्ठिसंजणयं ।
रिट्ठरयणं च नेमिं, उप्पयमाणं तओ नेमी ॥ ६१५ ॥

अथवा शिवादेव्या दृष्टं स्वप्ने तुष्टिसंजनकम् ।
रिष्टरत्नं च नेमिमुत्पतन् ततो नेमिः ॥ ६१५ ॥

पासइ लोया-ऽलोयं, तीया-ऽणागए य पज्जाए । तम्हा भन्नइ पासो, दुइयं पि हु कारणं एयं ॥६१६॥ पार्श्वसामान्यार्थः

पश्यति लोका-ऽलोकम् अतीता-ऽनागतांश्च पर्यायान् ।
तस्माद् भण्यते पार्श्वः, द्वितीयमपि खलु कारणमेतत्६१६

सप्पं सयणे जणणी, जं पासइ तमसि तेण पासजिणो । पार्श्वविशेषार्थः
पासम्मि समीवम्मि[य] नाणेण जणस्स तो पासो६१७

सर्पं शयने जननी यद् पश्यति तमसि तेन पार्श्वजिनः ।
पार्श्वे समीपे च ज्ञानेन जनस्य ततः पार्श्वः ॥ ६१७ ॥

जम्हा जम्मप्पभिई रूवेण बलेण नाण-चरणेहिं । वर्धमानसामान्यार्थः
जाओ पवड्ढमाणो, तेण जिणो वद्धमाणु त्ति ॥६१८॥

यस्माद् जन्मप्रभृति रूपेण बलेन ज्ञान-चरणैः ।
जातः प्रवर्धमानः तेन जिनो वर्धमान इति ॥ ६१८ ॥

जइ वा—

गय-तुरय-कोस-कोट्ठागार-गाम-नगरेहि भिच्च-रयणेहिं। वर्द्धमानविशेषार्थः
जायं पवड्ढमाणं, नायकुलं जेण अणुदियहं ॥६१९॥

यदि वा—

गज-तुरग-कोश-कोष्ठागार-ग्राम-नगरैर्भृत्य-रत्नैः ।
जातं प्रवर्धमानं ज्ञातकुलं येनाऽनुदिवसम् ॥ ६१९ ॥

तिसलादेवीगब्भे, संकंते चरिमजिणवरे जेण ।
तुट्ठेण ततो पिउणाऽवि वद्धमाणो कयं नामं ॥६२०॥

त्रिशलादेवीगर्भे संक्रान्ते चरमजिनवरे येन ।
तुष्टेन ततः पित्राऽपि वर्धमानः कृतं नाम ॥ ६२० ॥

"एवं मए" गाहासुत्रम् ॥

एवं ति भणियविहिणा, मए त्ति अप्पाणमाह वंदारू । "एवं मए" इत्यस्या गाथाया अर्थः
अभिमुहभावेण थुया, अभित्थुया नो पमत्तेण ॥६२१॥

एवं मया-गाथसूत्रम् ।

एवमिति भणितविधिना मयेत्यात्मानमाह वन्दारुः ।
अभिमुखभावेन स्तुता अभिष्टुता नो प्रमत्तेन ॥ ६२१ ॥

कम्मं रय त्ति वुच्चइ, बज्झंतं बद्धयं मलं होइ ।
विहुयमवणीयमुभयं पि जेहिं ते विहुयरयमला ६२२

फर्म रज इति उच्यते वाह्यान्तर्वद्धको मलो भवति ।
विधूतमपनीतम्, उभयमपि यैस्ते विधूतरजो-मलकाः ॥

जेसिं पहीणं नट्ठं, जरमरणं ते पहीणजर-मरणा ।
चउवीसं ति य गणणा, अवि-सद्दाओ तदन्नेऽवि ६२३

येषां प्रहीणं नष्टं जरा-मरणं ते प्रहीणजरा-मरणाः ।
चतुर्विंशतिरिति च गणना अपि-शब्दात् तदन्येऽपि॥६२३

रागाइजएण जिणा, ओही-मणनाणिणोऽवि किर हुंति।
तेसिं वरा केवलिणो, ते सामन्नाऽवि हु भवंति ॥६२४

रागादिजयेन जिना अवधि-मनोज्ञानिनोऽपि किल भवन्ति
तेषु वराः केवलिनस्ते सामान्या अपि खलु भवन्ति६२४

तो भन्नइ तित्थयरा, तेसिं अत्थो वियाहिओ चेव ।
मे मज्झ पसीयंतु त्ति तोसवंतो सया होंतु ॥ ६२५ ॥

ततो भण्यते तीर्थकराः, तेषामर्थो व्याख्यात एव ।
मे मम प्रसीदन्तु इति तोषवन्तः सदा भवन्तु ॥६२५॥

चो०—

वीतरागाः कथं प्रसीदन्तु ?

तूसंति संथुया जे, नियमा रूसंति निंदिया ते उ ।
कह वीयरागसद्दं, वहंति ? ते कह व थोयव्वा ? ॥६२६॥

चोदकः—

तुष्यन्ति संस्तुता ये नियमाद् रुष्यन्ति निन्दितास्ते तु ।
कथं वीतरागशब्दं वहन्ति ? ते कथं वा स्तोतव्याः ? ॥ ६२६ ॥

अह ते न पसीयंति हु, कज्जं भणिएण ता किमेएण ? ।
सच्चं ते भगवंतो, विरागदोसा न तूसंति ॥ ६२७ ॥
अथ ते न प्रसीदन्ति खलु कार्यं भणितेन ततः किमेतेन ? ।
सत्यं ते भगवन्तो विरागदोषा न तुष्यन्ति ॥ ६२७ ॥

भत्तिभणिएण इमिणा, कम्मक्खउवसमभावओ तह वि ।
भवियाण सुकल्लाणं, कसायफलभूयमल्लियइ ॥ ६२८ ॥
भक्तिभणितेनाऽनेन कर्मक्षयो-पशमभावतस्तथाऽपि ।
भव्यानां सुकल्याणं कपायफलभूतमालीयते ॥ ६२८ ॥

"कित्तिय-वंदिय-महिया" गाहा, सुत्रम् ॥
"कीर्तित-वन्दित-महिताः" गाथा, सूत्रम् ।

नामेहि समुच्चरिया, कित्तिया वंदिया सिरोनमणा ।
पुप्फाइएहि महिया, मय त्ति वा वायणा सुगमा ६२९
नामभिः समुच्चरिताः कीर्तिता वन्दिताः शिरोनमनात् ।
पुष्पादिकैर्महिता मयेति वा वाचना सुगमा ॥ ६२९ ॥

"कित्तिय-वंदियमहिया" इत्यस्या गाथाया अर्थः

जे पच्चक्खा एए, लोगस्स सुरा-ऽसुराइरूवस्स ।
उच्छन्नतमत्ता उत्तम त्ति सिद्धा सिवं पत्ता ॥ ६३० ॥
ये प्रत्यक्षा एते लोकस्य सुरा-ऽसुरादिरूपस्य ।
उच्छन्नतमस्त्वाद् उत्तमा इति सिद्धाः शिवं प्राप्ताः ॥ ६३० ॥

रोगाभावं आरोग्गमाहु तस्साहु(ह)गो उ जो पेचा ।
बोहीलाभो जिणधम्मसंपया तं महं दिंतु ॥ ६३१ ॥
रोगाऽभावं आरोग्यमाहुः तत्साधु(ध)कस्तु यः प्रेत्य ।
बोधिलाभो जिनधर्मसंपदा तं मह्यं ददतु ॥ ६३१ ॥

---

१११ पृष्ठगतं पूर्णमूलम्
एवं मए अभिथुआ विहुयरयमला पहीणजरमरणा ।
चउवीसं पि जिणवरा तित्थयरा मे पसीअंतु ॥ ५ ॥

१. पूर्णमूलम्—
कित्तिय-वंदिय-महिया जे ए लोगस्स उत्तमा सिद्धा ।
आरुग्ग-बोहिलाभं समाहिवरमुत्तमं दिंतु ॥ ६ ॥

मणनिव्वुई समाही, तेण वरं देंतु बोहिलाभं मे ।
तस्स वि सव्वपहाणत्तसाहगं उत्तमं भणियं ॥ ६३२॥

मनोनिर्वृतिः समाधिः तेन वरं ददतु बोधिलाभं मम ।
तस्याऽपि सर्वप्रधानत्वसाधकमुत्तमं भणितम् ॥ ६३२ ॥

चोयगो—

निदानम् आरोग्गबोहिलाभं, समाहिवरमुत्तमं च मे दिंतु ।
किं न हु नियाणमेयं? ति विभासा एत्थ कायव्वा ६३३

चोदकः—

आरोग्य-बोधिलाभं समाधिवरमुत्तमं च मम ददतु ।
किं न खलु निदानमेतद् ? इति विभाषाऽत्र कर्तव्या ६३३

आयरिओ—

भासा असच्चमोसा, नवरं भत्तीएँ भासिया एसा ।
न हु खीणपेज्जदोसा, दिंति समाहिं च बोहिं च ६३४

आचार्यः—

भाषा असत्यमृषा नवरं भक्त्या भाषितैषा ।
न खलु क्षीण-प्रेमदोषा ददति समाधिं च बोधिं च ॥६३४

किं तु—

भत्तीएँ जिणवराणं, परमाए खीणपेज्ज-दोसाणं ।
आरोग्ग-बोहिलाभं, समाहिमरणं च पावेंति ॥६३५॥

किन्तु—

भक्त्या जिनवराणां परमया क्षीणप्रेम-दोषाणाम् ।
आरोग्य-बोधिलाभं समाधिमरणं च प्राप्नुवन्ति ॥६३५॥

---

१. एतद्गाथात्रयम् (६३३-६३४-६३५) आवश्यके (१०५४-१०५५-१०५८) गाथारूपम्.

## "चंदेसु निम्मलयरा" सुत्रम् ॥

### "चन्द्रेषु निर्मलतराः" सूत्रम् ।

"चंदेसु निम्मलयरा" इति गाथार्थः

सत्तमियाबहुवयणं, नेयं इह पञ्चमीएँ अत्थम्मि ।
चंदेहिंतो वि तओ, नायव्वा निम्मलतरा ते ॥६३६॥
सप्तमिकाबहुवचनं ज्ञेयमिह पञ्चम्या अर्थे ।
चन्द्रेभ्योऽपि ततो ज्ञातव्या निर्मलतरास्ते ॥ ६३६ ॥
आइच्चा दिवसयरा, तेहिंतो वि अहियं पयासयरा ।
लोआलोउज्जोयगकेवलनाणप्पगासेण ॥ ६३७ ॥
आदित्या दिवसकराः तेभ्योऽप्यधिकं प्रकाशकराः ।
लोकालोकोद्द्योतककेवलज्ञानप्रकाशेन ॥ ६३७ ॥
सागरवरो समुद्दो, सयंभुरमणो तओ वि गंभीरा ।
सिद्ध त्ति निट्ठियट्ठा, सिद्धिं मुत्तिं मम दिसंतु ॥६३८॥
सागरवरः समुद्रः स्वयंभूरमणस्ततोऽपि गम्भीराः ।
सिद्धा इति निष्ठितार्थाः सिद्धिं मुक्तिं मम दिशन्तु ॥

सर्वचैत्यव-न्दना

जह एग चेइयगिहे, एगयरेसुब्भवे जिणवरिंदे ।
आसज्ज कया एसाऽभिवंदणा भत्तिजुत्तेहिं ॥ ६३९ ॥
यथैकचैत्यगृहाद् एकतरोद्भवान् जिनवरेन्द्रान् ।
आसाद्य कृतैषाऽभिवन्दना भक्तियुक्तैः ॥ ६३९ ॥
इय सव्वचेइयाण वि, कायव्वा वंदणा सुहत्थीहिं ।
सव्वे(वि)जिणिंदा एरिस त्ति पणिहाणजुत्तेहिं ॥६४०॥
इति सर्वचैत्यानामपि कर्तव्या वन्दना शुभा(शुभा)र्थिभिः।
सर्वे(ऽपि)जिनेन्द्रा एतादृशा इति प्रणिधानयुक्तैः ॥६४०
वंदामि चेइयाइं, काउस्सग्गेण तो असेसाइं ।
इय उत्तसंगभासो, सुणो त्ति एवं समुच्चरइ ॥ ६४१ ॥

---

१. पूर्णसूत्रम्—
चंदेसु निम्मलयरा आइच्चेसु अहियं पयासयरा ।
सागरवरगंभीरा सिद्धा सिद्धिं मम दिसंतु ॥ ७ ॥

वन्दे चैत्यानि कायोत्सर्गेण ततोऽशेषाणि ।
इत्युल्लसद्भावः पुनरप्येतत् समुच्चरति ॥ ६४१ ॥

"सव्वलोए अरिहंतचेइयाणं" इत्यादि ॥
"सर्वलोके अर्हच्चैत्यानाम्" इत्यादि ।

सव्वो त्ति निरवसेसो, उड्ढाऽहो-तिरियभेयपडिभिन्नो ।
लोगो त्ति खेत्तलोगो, सिद्धंते सुप्पसिद्धं जं ॥६४२॥
सर्व इति निरवशेष ऊर्ध्वा-ऽधस्तिर्यग्भेदप्रतिभिन्नः ।
लोक इति क्षेत्रलोकः सिद्धान्ते सुप्रसिद्धं यत् ॥ ६४२ ॥

आगासस्स पएसा, उड्ढं च अहे य तिरियलोगे य ।
जाणाहि खेत्तलोगं, अणंतजिणदेसियं सम्मं ॥६४३॥
आकाशस्य प्रदेशा ऊर्ध्वं च अधश्च तिर्यग्लोके च ।
जानीहि क्षेत्रलोकमनन्तजिनदेशितं सम्यक् ॥ ६४३ ॥

त्रिलोकचैत्यसंख्या.

तत्थ किर उड्ढलोए, चउरासी चेइयाण लक्खाइं ।
सत्ताणउइसहस्सा, तह तेवीसं विमाणा उ ॥ ६४४ ॥
तत्र किलोर्ध्वलोके चतुरशीतिश्चैत्यानां लक्षाणि ।
सप्तनवतिसहस्राणि तथा त्रयोविंशतिर्विमानानि तु ॥६४४

सत्तेव य कोडीओ, हवंति बावत्तरी सयसहस्सा ।
अहलोए सासयचेइयाण नेया इमा संखा ॥ ६४५ ॥
सप्तैव च कोट्यो भवन्ति द्वासप्ततिः सहस्राः ।
अधोलोके शाश्वतचैत्यानां ज्ञेया इयं संख्या ॥ ६४५ ॥

जिणभवणाइं तिरियं, संखाईयाइँ भोमनगरेसु ।
जोइसियविमाणेसु य, तत्तो वि हु संखगुणियाइं ६४६
जिनभवनानि तिर्यक् संख्यातीतानि भौमनगरेषु ।
ज्योतिषिकविमानेषु च ततोऽपि खलु संख्यगुणितानि ॥

१ पूर्ववद् व्याख्येयम् ।

वासहर-मेरु-वक्खार-दहवई-माणुसुत्तरनगेसु ।
नंदीसर-कुंडल-रुयग-वट्टवेयड्ढमाईसु ॥ ६४७ ॥
वर्षधर-मेरु-वक्षस्कार-द्रहपति-मानुषोत्तरनगेषु ।
नन्दीश्वर-कुण्डल-रुचक-वृत्तवैताढ्यादिषु ॥ ६४७ ॥

पंचदसकम्मभूमिसु, सासय-किंत्तिमयभेयभिन्नाइं ।
अरहंतचेइयाइं, तिरियंलोगम्मि तेसिमहं ॥ ६४८ ॥
पञ्चदशकर्मभूमिषु शाश्वत-कृत्रिमकभेदभिन्नानि ।
अर्हच्चैत्यानि तिर्यग्लोके तेषामहम् ॥ ६४८ ॥

अरहंतचेइयाणं, करेइ इच्चाइदंडगं पढिउं ।
पुव्विं व काउसग्गं, करेज्ज झाएज्ज मंगलगं ॥ ६४९ ॥
अर्हच्चैत्यानां करोति इत्यादिदण्डकं पठित्वा ।
पूर्वमिव कायोत्सर्गं कुर्याद् ध्यायेद् मङ्गलकम् ॥ ६४९ ॥

पुव्वं व पारिऊणं, परमेट्ठीणं थुई अ काऊणं ।
देज्जा ऽणेगजिणाणं, थुई समुद्दामसद्देण ॥ ६५० ॥
पूर्वमिव पारयित्वा परमेष्ठिनां स्तुतीश्च कृत्वा ।
दद्यादनेकजिनानां स्तुतीः समुद्दामशब्देन ॥ ६५० ॥

दंसणसुद्धिनिमित्तं, तित्थंकरवंदणा कया एसा ।
नाणविसुद्धिनिमित्तं, एत्तो वंदामि सुयणाणं ॥ ६५१ ॥
दर्शनशुद्धिनिमित्तं तीर्थंकरवन्दना कृतैषा ।
ज्ञानविशुद्धिनिमित्तमितो वन्दे श्रुतज्ञानम् ॥ ६५१ ॥

तं मिच्छसम्मभेया, दुविहं मिच्छसुयवज्जणट्ठाए ।
जेहिँ पणीयं सम्मं, नाणं ते वंदए एवं ॥ ६५२ ॥
तद् मिथ्या-सम्यग्भेदाद् द्विविधं मिथ्याश्रुतवर्जनार्थाय ।
यैः प्रणीतं सम्यग् ज्ञानं तान् वन्दते एवम् ॥ ६५२ ॥

"पुक्खरवरदीवड्ढे" इत्यादि ।

"पुष्करवरद्वीपार्धे" इत्यादि ।

तत्थ—

श्रुतस्तवार्थः उद्धारसागराणं, अड्ढाइज्जाण जत्तिया समया ।
एत्थ किर तिरियलोए, दीवसमुद्दा उ एवइया ६५३

तत्र—

उद्धारसागराणामर्धतृतीयानां यावन्तः समयाः ।
अत्र किल तिर्यग्लोके द्वीप–समुद्रास्तु एतावन्तः॥६५३॥

अब्भितरओ दीवो–दहीण पडिपुन्नचंदसंठाणो ।
जंबुद्दीवो लक्खं, विक्खंभायामओ होइ ॥ ६५४ ॥

अभ्यन्तरको द्वीपो–दधीनां प्रतिपूर्णचन्द्रसंस्थानः ।
जम्बूद्वीपो लक्षं विष्कम्भा-ऽऽयामतो भवति ॥ ६५४ ॥

तं पुण लवणसमुद्दो, परिक्खिवई दुगुणलक्खविक्खंभो ।
तं पुण धायइसंडो, तं दुगुणं तं च कालोओ॥६५५॥

तं पुनर्लवणसमुद्रः परिक्षिपति द्विगुणलक्षविष्कम्भः ।
तं पुनर्धातकीषण्डः (खण्डः) तं द्विगुणं तं च कालोदः ॥

सो पुण पुक्खरदीवेण वेढिओ पुव्वदुगुणमाणेणं ।
इय दुगुणदुगुणमाणा, सव्वे दीवा समुद्दा य ॥६५६॥

स पुनः पुष्करद्वीपेन वेष्टितः पूर्वद्विगुणमानेन ।
इति द्विगुणद्विगुणमानाः सर्वे द्वीपाः समुद्राश्च ॥६५६॥

तेसु किर तइयदीवो, सोलसलक्खप्पमाणविक्खंभो ।
पुक्खरवरो त्ति भन्नइ, तस्सद्धं पुक्खरवरद्धं ॥ ६५७॥

तेषु किल तृतीयद्वीपः षोडशलक्षप्रमाणविष्कम्भः ।
पुष्करवर इति भण्यते तस्यार्धं पुष्करवरार्धम् ॥ ६५७ ॥

---

१. पूर्णमूलम्—
पुक्खरवरदीवड्ढे धायइसंडे य जंबुद्दीवे य ।
भरहे-रवय-विदेहे धम्माइगरे नमंसामि ॥ १ ॥

पायारसंठिएणं, परिक्खित्तं माणुसनगेणं ।
एयं मणुस्सखेत्तं, बाहिं तिरिया य देवा य ॥६५८॥
प्राकारसंस्थितेन परिक्षिप्तं मानुषनगेन ।
एतद् मनुष्यक्षेत्रं बहिस्तिर्यञ्चश्च देवाश्च ॥ ६५८ ॥
पुक्खरवरदीवड्ढे, धायइसंडे दुइयदीवम्मि ।
जंबुदीवम्मि य आइमम्मि सव्वेसि दीवाणं ॥ ६५९ ॥
पुष्करवरद्वीपार्धे धातकीखण्डे द्वितीयद्वीपे ।
जम्बूद्वीपे चादिमे सर्वेषां द्वीपानाम् ॥ ६५९ ॥
पच्छाणुपुव्वियाए, निद्देसो एस खित्तगुरुयत्ता ।
भरहे-रवय-विदेहे, एस समाहारदंदो उ ॥ ६६० ॥
पश्चानुपूर्वीतया निर्देश एष क्षेत्रगुरुकत्वात् ।
भरतै-रावत-विदेहे एष समाहारद्वन्द्वस्तु ॥ ६६० ॥
एक्केक्कं पञ्चगुणं, जम्हा भरहाइयाण एयाण ।
पनरससु कम्मभूमिसु, भावत्थो होइ एयस्स ॥६६१॥
एकैकं पञ्चगुणं यस्माद् भरतादिकानामेतेषाम् ।
पञ्चदशसु कर्मभूमिषु भावार्थो भवति एतस्य ॥६६१॥
धम्मो इह सुयधम्मो, आइगरा होंति तस्स तित्थयरा ।
ते उ नमंसामि अहं, वंदामि विसुद्धचित्तेणं ॥६६२॥
धर्म इह श्रुतधर्म आदिकरा भवन्ति तस्य तीर्थकराः ।
तांस्तु नमस्याम्यहं वन्दे विशुद्धचित्तेन ॥ ६६२ ॥
धम्माइगरे एवं, थोऊण सुयस्स संथवं कुणइ ।
तमतिमिरपडलविद्धंसणस्स एगाएँ गाहाए ॥ ६६३ ॥
धर्मादिकरानेवं स्तुत्वा श्रुतस्य संस्तवं करोति ।
तमस्तिमिरपटलविद्ध्वंसनस्य एकया गाथया ॥ ६६३ ॥

---

१. सा च इयं गाथा—
तमतिमिरपडलविद्धंसणस्स सुरगण-नरिंदमहिअस्स ।
सीमाधरस्स वंदे पप्फोडिअमोहजालस्स ॥ २ ॥

"तमतिमिर" इति गाथार्थः।

तत्थ तमो अन्नाणं, रूविज्जइ तम्मि तिमिरपडलं व।
विद्धंसणो विणासी, तस्स उ जिणभणियसिद्धंतो ६६४
तत्र तमोऽज्ञानं रूप्यते तस्मिन् तिमिरपटलमिव।
विध्वंसनो विनाशी तस्य तु जिनभणितसिद्धान्तः ६६४

तस्स त्ति सुरा पयडा, गणो य संघो फुड च्चिय नरिंदो।
तेहिं महियस्स परिपूइयस्स गुरुभत्तिराएण ॥६६५॥
तस्येति सुराः प्रकटा गणश्च सङ्घः स्फुट एव नरेन्द्रः।
तैर्महितस्य परिपूजितस्य गुरुभक्तिरागेण ॥ ६६५ ॥

सीमा मेरा तं जो, धरई धम्मस्स तह अहम्मस्स।
तं वंदे भत्तीए, छट्ठविभत्ती उ बीयत्थे ॥ ६६६ ॥
सीमा मर्यादा तां यो धरति धर्मस्य तथाऽधर्मस्य।
तं वन्दे भक्त्या षष्ठीविभक्तिस्तु द्वितीयार्थे ॥ ६६६ ॥

पप्फोडियमइसयचुन्नियं ति जेणेह मोहमहजालं।
वंदे तं सिद्धंतं, अहवा तस्सेव माहप्पं ॥ ६६७ ॥
प्रस्फोटितमतिशयचूर्णितमिति येनेह मोहमहाजालम्।
वन्दे तं सिद्धान्तमथवा तस्यैव माहात्म्यम् ॥ ६६७ ॥

तहा—"जाई-जरा-मरण" इत्यादि सूत्रम् ॥
तथा—"जाति-जरा-मरण–" इत्यादि सूत्रम्।

"जाइ" शब्दार्थः

जाइ त्ति मासनवगं, गब्भे वसिऊण गरुयदुक्खेणं।
नेरइयस्स व घडियालयाओ जीवस्स णिग्गमणं ६६८
जातिरिति मासनवकं गर्भे उषित्वा गुरुकदुःखेन।
नैरयिकस्येव घटिकाऽऽलयाद् जीवस्य निर्गमनम् ॥

---

१. पूर्णमूलम्—
जाई-जरा-मरण-सोगपणासणस्स कल्लाणपुक्खलविसालसुहावहस्स।
को देव-दाणव-नरिंदगणच्चिअस्स धम्मस्स सारमुवलब्भ करे पमायं ३

होइ जरा वुड्डत्तं, ववसायपहुत्तरूवबलमहणी ।
जा परिभवदवदड्ढं, जीवंतमयं जणं कुणइ ॥ ६६९ ॥
भवति जरा वृद्धत्वं व्यवसाय-प्रभुत्व-रूप-बलमथनी ।
या परिभवदवदग्धं जीवन्मृतं जनं करोति ॥ ६६९ ॥
मरणं पुण पंचत्तं, भयंकरं सयलजीवलोयस्स ।
निययमनायागमणं, दुहावहं वेरिचक्कं व ॥ ६७० ॥
मरणं पुनः पञ्चत्वं भयंकरं सकलजीवलोकस्य ।
नियतमज्ञातागमनं दुःखावहं वैरिचक्रमिव ॥ ६७० ॥
सोओ मण-देहाणं, संतावयरो जणस्स परिणामो ।
धणहरण-बंधुमरणाइसंभवो भवभमनिमित्तं ॥६७१॥
शोको मनो-देहयोः संतापकरो जनस्य परिणामः ।
धनहरण-बन्धुमरणादिसंभवो भवभ्रमनिमित्तम् ॥६७१॥
एएसिमणिट्ठाणं, पणासणो जो जिणिंदसुयधम्मो ।
तस्सोवलब्भ सारं, एमाइपयाण संबंधो ॥ ६७२ ॥
एतेषामनिष्टानां प्रणाशनो यो जिनेन्द्रश्रुतधर्मः ।
तस्योपलभ्य सारमेवमादिपदानां संबन्धः ॥ ६७२ ॥
असुहनिवारणसत्ती, पाएणेण्ण तस्स निद्दिट्ठा ।
सुहसंपयाण सत्ती, भण्णइ तीएण पाएण ॥ ६७३ ॥
असुभ(असुख)निवारणशक्तिः पादेनैतेन (प्रायेणैतेन)
तस्य निर्दिष्टा ।
सुख (शुभ) संपदां शक्तिर्भण्यते तृतीयेन पादेन ॥६७३॥
फग्गुं सारं जम्हा, भणेइ वाहरइ तेण कल्लाणं ।
पुक्खलमिति संपुन्नं, सव्वपहाणं पुण विसालं ॥६७४॥
फल्गु सारं यस्मात् भणति व्याहरति तेन कल्याणम् ।
पुष्कलमिति संपूर्णं सर्वप्रधानं पुनर्विशालम् ॥ ६७४ ॥
निविडविसेसणजुत्तं, गुरुभावहट्ठं करेइ जीवाणं ।
जो तस्स भणियमिमिणा, गुणस्स गुणदाणगारत्थं ॥

त्रिविधविशेषणयुक्तं सुखमावहति करोति जीवानाम् ।
यस्तस्य भणितमनेन श्रुतस्य श्रुतदानसामर्थ्यम् ॥ ६७५ ॥

को त्ति सयन्नो पुरिसो, देवाईया य पायडा चेव ।
तेसिं गणेहिं दढमच्चियस्स परिपूइयस्स त्ति ॥ ६७६ ॥

क इति सकर्णः पुरुषो देवादिकाश्च प्रकटाश्चैव ।
तेषां गणैर्दृढमर्चितस्य परिपूजितस्येति ॥ ६७६ ॥

धम्मो सुयधम्मो चिय, एए उ सारो य तस्स माहप्पं ।
उवलब्भ जाणिऊणं, करेइ लुत्तो इकारो त्थ ॥ ६७७ ॥

धर्मः श्रुतधर्म एव एते तु सारश्च तस्य माहात्म्यम् ।
उपलभ्य ज्ञात्वा करोति लुप्त इकारोऽत्र ॥ ६७७ ॥

सिढिलिचमिह पमाओ, भेओ अत्थाओ तम्मि विसयम्मि ।
जाणियजिणवयणाणं, न एस जुत्तो त्ति भावत्थो ६७८

शिथिलत्वमिह प्रमादो भेदोऽर्थात् तस्मिन् विषये ।
ज्ञातजिनवचनानां नैष युक्त इति भावार्थः ॥ ६७८ ॥

तहा—"सिद्धे भो ! पयओ" वुत्तं सुत्तम् ॥
तथा—"सिद्धान् भो ! प्रयतः" वृत्तं सूत्रम् ।

"सिद्धे" इति वृत्तार्थः

सिद्धे लद्धपइट्ठे, अक्खलिए कुमयसत्थनिवहेण ।
अहवा सिद्धे णिच्चे, तिकालभाविप्पहावेण ॥ ६७९ ॥

सिद्धान् लब्धप्रतिष्ठान् अस्खलितान् कुमतशास्त्रनिवहेन ।
अथवा सिद्धान् नित्यान् त्रिकालभाविप्रभावेण ॥ ६७९ ॥

"सिद्धे" पदस्यापरार्थः

सिद्धे वा विक्खाए, सदेव-मणुयाऽसुरम्मि लोयम्मि ।
भो आमंतणसद्दो, अइसयनाणीण सव्वाणं ॥ ६८० ॥

---

१. पूर्णमूलम्—
सिद्धे भो ! पयओ णमो जिणमए नंदी सया संजमे,
देवं-नाग-सुवण्ण-किण्णरगणस्सब्भूअभावच्चिए ।
लोगो जत्थ पइट्ठिओ जगमिणं तेलुक्कमच्चासुरं,
धम्मो वड्ढउ सासओ विजयऊ धम्मुत्तरं वड्ढउ ॥ ४ ॥

सिद्धा वा विख्याताः सदेव-मनुजा-ऽसुरे लोके ।
भोः आमन्त्रणशब्दोऽतिशयज्ञानिनां सर्वेषाम् ॥ ६८० ॥

भो! पेच्छह अइसइणो, पमायचाएण एस पयओ हं ।
वयणेण तं पयासइ, होउ नमो मे जिणमयस्स ६८१
भोः! प्रेक्षध्वमतिशयिनः प्रमादत्यागेन एष प्रयतोऽहम् ।
वचनेन तत् प्रकाशते भवतु नमो मम जिनमतस्य ६८१

छट्ठीसत्तमियाणं, नत्थि विभत्तीणमत्थभेओ त्ति ।
तेण चउत्थी-अत्थे, निद्दिट्ठा सत्तमी सुत्ते ॥ ६८२ ॥
षष्ठी-सप्तमीकानां नास्ति विभक्तीनामर्थभेद इति ।
तेन चतुर्थ्यर्थे निर्दिष्टा सप्तमी सूत्रे ॥ ६८२ ॥

अहवा वि नमो अव्वयमवगयतइयाविभत्तियं नेयं ।
पयओ नमणेणा ऽहं, जिणमयविसए त्ति वक्कत्थो६८३
अथवाऽपि 'नमस्' अव्ययमपगततृतीयाविभक्तिकं ज्ञेयम् ।
प्रयतो नमनेनाऽहं जिनमतविषये इति वाक्यार्थः ६८३

'न-मो' पदस्य नव्योऽर्थः

अहवा वि न-मा-सद्दा, पडिसेहत्था परोप्परं दो वि ।
पगयं गमेंति अत्थं, पयओ ऽहं जिणमए सिद्धे ६८४
अथवाऽपि 'न-मा'—शब्दौ प्रतिषेधार्थौ परस्परं द्वावपि ।
प्रकृतं गमयतोऽर्थं प्रयतोऽहं जिनमते सिद्धे ॥ ६८४ ॥

जिणमयमिह सुयधम्मो, थोउं सो चेव पत्थुओ जम्हा ।
होइ जियाणं नंदी, जेण सया संजमे तत्तो ॥६८५॥
जिनमतमिह श्रुतधर्मः स्तोतुं स एव प्रस्तुतो यस्मात् ।
भवति जीवानां नन्दिर्येन सदा संयमस्ततः ॥ ६८५ ॥

नंदी परमसमिद्धी, सया वि णिच्चं पि संजमे चरणे ।
तस्स विसेसणमेयं, देव-नागाइ विन्नेयं ॥ ६८६ ॥
नन्दिः परमसमृद्धिः सदाऽपि नित्यमपि संयमे चरणे ।
तस्य विशेषणमेतद् देव-नागादि विज्ञेयम् ॥ ६८६ ॥

देवा विमाणवासी, ओइसियाई उ उवरिमा सव्वे ।
नाग-सुवन्ना भुवणाहिवासि उवलक्खणं भणियं ६८७

देवा विमानवासिनो ज्योतिषिकादयस्तु उपरिमाः सर्वे ।
नाग-सुवर्णा भुवनाधिवासिन उपलक्षणं भणितम् ॥

किन्नरगणगहणाओ, संगहिया सयलवंतरा देवा ।
चउविहसुरेहि सब्भूयभावओ परमभत्तीए ॥ ६८८ ॥

किन्नरगणग्रहणात् संगृहीताः सकलव्यन्तरा देवाः ।
चतुर्विधसुरैः सद्भूतभावतः परमभक्त्या ॥ ६८८ ॥

दढमचियम्मि परिपूइयम्मि नंदी जओ हवइ चरणे ।
सवायरेण संपइ, पयओ ऽहं तम्मि सुयधम्मे॥६८९॥

दृढमर्चिते परिपूजिते नन्दिर्यतो भवति चरणे ।
सर्वादरेण संप्रति प्रयतोऽहं तस्मिन् श्रुतधर्मे ॥ ६८९ ॥

सब्भूय-नागसद्दक्खराण पढमाणमेत्थ दुब्भावो ।
प्राकृतलक्षणम् छंदोभंगभयाओ, पाययलक्खणबलाओ वि ॥६९०॥

सद्भूत-नाग-शब्दाक्षराणां प्रथमानामत्र द्विर्भावः ।
छन्दोभङ्गभयात् प्राकृतलक्षणबलादपि ॥ ६९० ॥

भणियं च तत्थ—

नीया लोयमभूया, य आणिया दोन्नि विंदु-दुब्भावा ।
अत्थं गमंति तं चिय, जो तेसिं पुव्वमेवासि ॥६९१॥

भणितं च तत्र—

नीतौ लोपमभूतौ च आनीतौ द्वौ विन्दु-द्विर्भावौ ।
अर्थं गमयतः तमेव यस्तेषां पूर्वमेवाऽऽसीत् ॥ ६९१ ॥

लोइज्जइ दिस्सइ जं, जहट्ठिओ केवलेण णाणेण ।
पंचत्थिकायमइओ, तो लोगो एत्थ घेत्तव्वो ॥६९२॥

लोक्यते दृश्यते यद् यथास्थितः केवलेन ज्ञानेन ।
पञ्चास्तिकायमयोऽतो लोकोऽत्र ग्रहीतव्यः ॥ ६९२ ॥

---

१ "क्वचित् छन्दःपूरणेऽपि ( अनुस्वारः )—देवं-नाग-सुवण्ण ।"—८-१-२६ इति अनुस्वारविधायके सूत्रे श्रीहेमचन्द्राचार्याः ।

जत्थ त्ति जम्मि सुयधम्मदप्पणे अवितहोवलंभाओ ।
चिट्ठइ पइट्ठिओ इव, पच्चक्खं जयमिणं सो उ ६९३
यत्रेति यस्मिन् श्रुतधर्मदर्पणेऽवितथोपलम्भात् ।
तिष्ठति प्रतिष्ठित इव प्रत्यक्षं जगदिदं स तु ॥ ६९३ ॥

नरलोयमेत्तमेयं ति संसयावगमकारणे भणियं ।
तेलोक्को उड्ढा-ऽहो-तिरियविभेयं तिहुयणं पि ॥६९४॥
नरलोकमात्रमेतदिति संशयापगमकारणे भणितम् ।
त्रैलोक्यं-ऊर्ध्वा-ऽध-स्तिर्यग्विभेदं त्रिभुवनमपि ॥ ६९४ ॥

तस्स विसेससरूवं, नेयं मच्चासुरं ति इह मच्चा ।
भणिया मणुया असुरा वि दाणवा तेसि एगत्तं ६९५
तस्य विशेषस्वरूपं ज्ञेयं मर्त्याऽसुरमिति इह मर्त्याः ।
भणिता मनुजा असुरा अपि दानवास्तयोरैक्यम् ॥६९५॥

एवं किर दंडो इव, मज्झग्गहणेण एत्थ संगहिओ ।
सुर-नारयाइरूवो,॰ लोगो सव्वो वि दट्ठव्वो ॥ ६९६ ॥
एवं किल दण्ड इव मध्यग्रहणेनाऽत्र संगृहीतः ।
सुर-नारकादिरूपो लोकः सर्वोऽपि द्रष्टव्यः ॥ ६९६ ॥

एवं संखेवेणं, काउं सुयधम्मसंथवो भव्वो ।
अइभत्तिभरियचित्तो, आसीवायं इमं पढइ ॥६९७॥
एवं संक्षेपेण कृत्वा श्रुतधर्मसंस्तवं भव्यः ।
अतिभक्तिभृतचित्त आशीर्वादमिमं पठति ॥ ६९७ ॥

धम्मो त्ति सुत्तधम्मो, वड्ढउ पावेइ उन्नइं परमं ।
सासयमणवरयं चिय, विजयाओ दुम्मयचमूणं ६९८
धर्म इति सूत्रधर्मो वर्धतां प्राप्नोति उन्नतिं परमाम् ।
शाश्वतमनवरतमेव विजयाद् दुर्मदचमूनाम् ॥ ६९८ ॥

धम्मो चरित्तधम्मो, तेण जहा उत्तरं अइपहाणं ।
होइ तह चिय वड्ढउ, सुयधम्मो एस भगवं ति ६९९

धर्मंश्चारित्रधर्मः तेन यथा-उत्तरमतिप्रधानम् ।
भवति तथैव वर्धतां श्रुतधर्म एष भगवानिति ॥ ६९९ ॥

आयरसूयणहेउं, वड्ढउ भणियं पुणो इमभदुट्टं ।
उवविस उवविस भुंजसु, दीसइ लोए वि ववहारो ७००

आदरसूचनहेतुं 'वर्धताम्' भणितं पुनरिदमदुष्टम् ।
उपविश उपविश भुङ्क्ष दृश्यते लोकेऽपि व्यवहारः ७००

सिद्धिसमूसुयहियओ, न हु एत्तियवंदणेण परितुट्ठो ।
तव्वंदणाइहेउं, कुणइ पुणो एयमुवसग्गं ॥ ७०१ ॥

सिद्धिसमुत्सुकहृदयो न खलु एतावद्वन्दनेन परितुष्टः ।
तद्वन्दनादिहेतुं करोति पुनरेवमुपस(मुत्स)र्गम् ॥७०१॥

"सुयस्स भगवओ करेमि काउस्स-
ग्गमिच्चाइ जाव वोसिरामि" ।

"श्रुतस्य भगवतः करोमि कायोत्सर्गमित्यादि
यावद् व्युत्सृजामि" ॥

पुव्वं व कायचायं, काउं परिचिंतिऊण मंगलयं ।
विहिपारियउस्सग्गो, सुयनाणथुइं तओ देज्जा ७०२

पूर्वमिव कायत्यागं कृत्वा परिचिन्त्य मङ्गलकम् ।
विधिपारितोत्सर्गः श्रुतज्ञानस्तुतिं ततो दद्यात् ॥ ७०२ ॥

पढमत्थए भावजिणा, बीए ठवणाजिणा जिणहरत्था ।
तइए पुण नामजिणा, तिलोयठवणाजिणा य थुया ७०३

प्रथमस्तवे भावजिना द्वितीये स्थापनाजिना जिनगृहस्थाः ।
तृतीये पुनर्नामजिनास्त्रिलोकस्थापनाजिनाश्च स्तुताः ॥७०३॥

इह पुक्खरवरदंडे, दव्वरिहंताण वंदणा विहिया ।
तित्थयरनामबंधणनिबंधणं जेण सुयणाणं ॥७०४॥

---

१ शेषं पूर्ववत्--

इह पुष्करवरदण्डे द्रव्यार्हतां वन्दना विहिता ।
तीर्थकरनामबन्धननिबन्धनं येन श्रुतज्ञानम् ॥ ७०४ ॥

भणियं च—

भूयस्स भाविणो वा, भावस्सिह कारणं तु जं लोए ।
तं दव्वं सव्वन्नू, सचेयणाऽचेयणं बेंति ॥ ७०५ ॥

भणितं च—

भूतस्य भाविनो वा भावस्येह कारणं तु यल्लोके ।
तद् द्रव्यं सर्वज्ञाः सचेतना-ऽचेतनं ब्रुवन्ति ॥ ७०५ ॥

तहाहि—

अप्पुव्वनाणगहणे, सुयभत्ती पवयणे पभावणया ।
एएहिं कारणेहिं, तित्थयरत्तं लहइ जीवो ॥ ७०६ ॥

तथाहि—

अपूर्वज्ञानग्रहणे श्रुतभक्तिः प्रवचने प्रभावनता ।
एतैः कारणैः तीर्थकरत्वं लभते जीवः ॥ ७०६ ॥

सिद्धस्तवप्रक्रमः

एवं चउप्पगारा, अरहंता ताव वंदिया एए ।
संपइ कमपत्ताणं, सिद्धाण करेमि संथवणं ॥ ७०७ ॥

एवं चतुष्प्रकारा अर्हन्तस्तावद् वन्दिता एते ।
संप्रति क्रमप्राप्तानां सिद्धानां करोमि संस्तवनम् ॥७०७॥

अहव चिइवंदणाओ, सिद्धत्तं जेहि पावियं पुव्विं ।
तप्पयलाभनिमित्तं, सिद्धे वंदामि ते इण्हि ॥ ७०८ ॥

अथवा चैत्यवन्दनात् सिद्धत्वं यैः प्राप्तं पूर्वम् ॥
तत्पदलाभनिमित्तं सिद्धान् वन्दे तानिदानीम् ॥ ७०८ ॥

---

१. एतत्समानं संस्कृतम्—"भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद्द्रव्यं तत्त्वज्ञैः सचेतना-ऽचेतनं गदितम्"—विशेषावश्यके ५८४ गाथा टीकायाम्—( पृ० ३११ ).

जह गारुडिओ गरुडं, विज्जो धन्नंतरिं सया सरइ ।
विज्जासिद्धं विज्जाहरो वि इट्टत्तसिद्धत्थं ॥ ७०९ ॥
यथा गारुडिको गरुडं, वैद्यो धन्वन्तरिं सदा स्मरति ।
विद्यासिद्धं विद्याधरोऽपि इष्टत्वसिद्ध्यर्थम् ॥ ७०९ ॥
एवं सिद्धपयत्थी, करेमि सिद्धाण संथवमियाणिं ।
इय भावंतो सम्मं, सिद्धाण थुई पढइ (पयओ)॥७१०॥
एवं सिद्धपदाऽर्थी करोमि सिद्धानां संस्तवमिदानीम् ।
इति भावयन् सम्यक् सिद्धानां स्तुतिं पठति (प्रयतः)७१०

"सिद्धाणं बुद्धाणं"[1] इत्यादि सूत्रम् ॥
"सिद्धेभ्यो बुद्धेभ्यः"–इत्यादि सूत्रम् ॥

सिद्धस्तवार्थः सिद्धा निप्फन्ना खलु, सकारंतरपवित्तिनिरवेक्खा ।
सव्वुत्तमपयपत्ता, जेसिं परिकम्मणा नत्थि ॥ ७११ ॥
सिद्धा निष्पन्नाः खलु सत्कारान्तरप्रवृत्तिनिरपेक्षाः ।
सर्वोत्तमपदप्राप्ता येषां परिकर्मणा नास्ति ॥ ७११ ॥
विज्जा-जोगं-जण-धाउवायसिद्धाइया वि लोगम्मि ।
सिद्धा चेव पसिद्धा, विसेसणं तेण बुद्धाणं ॥ ७१२ ॥
विद्या-योगा-ऽञ्जन-धातुवादसिद्धादिका अपि लोके ।
सिद्धा एव प्रसिद्धा विशेषणं तेन बुद्धेभ्यः ॥ ७१२ ॥
बुज्झंति जे समग्गं, वट्टंतमणागयं अईयं पि ।
भवभाविवत्थुतत्तं, तेसिं बुद्धाण सिद्धाणं ॥ ७१३ ॥
बोधन्ति ये समग्रं वर्तमानमनागतमतीतमपि ।
भवभाविवस्तुतत्त्वं तेभ्यो बुद्धेभ्यः सिद्धेभ्यः ॥ ७१३ ॥
केषांचिद् मतम् मुत्तिं पत्ता वि सुरा, परिभूयं जाणिऊण नियतित्थं ।
संसारे अवयारं, कुणंति केसिंचि मयमेयं ॥ ७१४ ॥

---

१ पूर्णमूलम्—
सिद्धाणं बुद्धाणं पारगयाणं परंपरगयाणं ।
लोयग्गमुवगयाणं नमो सया सव्वसिद्धाणं ॥ १ ॥

मुक्तिं प्राप्ता अपि सुराः परिभूतं ज्ञात्वा निजतीर्थम् ।
संसारे अवतारं कुर्वन्ति केषाञ्चिद् मतमेतत्॥ ७१४ ॥

तेसि पडिबोहणत्थं, पारगयाणं विसेसणं भणियं ।
न हु हुंति तारिसा जं, पारगया भवसमुद्दस्स ७१५

तेषां प्रतिबोधनार्थं 'पारगतेभ्यो' विशेषणं भणितम् ।
न खलु भवन्ति तादृशा यत् पारगता भवसमुद्रस्य ७१५

पारं पज्जंतं खलु, गयाण पत्ताण भवमहोयहिणो ।
अच्चंतियगमणेणं, भुज्जो वि तदप्पवेसाओ ॥ ७१६ ॥

पारं पर्यन्तं खलु गतेभ्यः प्राप्तेभ्यो भवमहोदधेः ।
आत्यन्तिकगमनेन भूयोऽपि तदप्रवेशात् ॥ ७१६ ॥

ते वि हु अणाइसिद्धा, केहि वि इट्ठ त्ति तन्निरासत्थं ।
भन्नइ विसेसणंतर-मन्नं पि परंपरगयाणं ॥ ७१७ ॥

तेऽपि खलु अनादिसिद्धाः कैरपि इष्टा इति तन्निरासार्थम् ।
भण्यते विशेषणान्तरमन्यदपि 'परंपरागतेभ्यः' ॥७१७॥

एगुवएसादन्नो, तओ वि अन्नो तओ वि अन्नयरो ।
एवं परंपराए, गयाण पत्ताण मुत्तिपयं ॥ ७१८ ॥

एकोपदेशादन्यः, ततोऽपि अन्यः, ततोऽपि अन्यतरः ।
एवं परंपरया गतेभ्यः प्राप्तेभ्यो मुक्तिपदम् ॥ ७१८ ॥

न य वत्तव्वं पढमो, कस्सुवएसेण सिवपयं पत्तो ? ।
कालस्स व पढमत्तं, नत्थि चिय जेण कस्स वि ७१९

न च वक्तव्यं प्रथमः कस्योपदेशेन शिवपदं प्राप्तः ? ।
कालस्य वा प्रथमत्वं नास्त्येव येन कस्यापि ॥ ७१९ ॥

किं च—

विणया नाणं नाणा, उ दंसणं दंसणाओ चरणं तु ।
चरणाहिंतो मोक्खो, परंपरा इमा एवं ॥ ७२० ॥

किं च—

विनयाद् ज्ञानं, ज्ञानात्तु दर्शनं दर्शनाच्चरणं तु ।
चरणेभ्यो मोक्षः परंपरा इयमेवम् ॥ ७२० ॥

नियवीरिएण अहवा, कालसहावाइणो वसे काउं ।
भवियव्वयनामाए, विसालसोवाणमालाए ॥ ७२१ ॥
निजवीर्येण अथवा काल-स्वभावादीन् वशे कृत्वा ।
भवितव्यतानाम्या विशालसोपानमालया ॥ ७२१ ॥

मिच्छत्तमहाकूवा, निग्गंतूण ऽज्जिऊण य कमेण ।
संमत्तदेसविरई-चरणाइपरंपरं परमं ॥ ७२२ ॥
मिथ्यात्वमहाकूपाद् निर्गत्य अर्जित्वा च क्रमेण ।
सम्यक्त्व-देशविरति-चरणादिपरंपरां परमाम् ॥ ७२२ ॥

एवं परंपराए, गयाण मोक्खं सया नमो होउ ।
जस्स जहिं मलविगमो, तस्स तहिं चेव मुत्तिपयं ७२३
एवं परंपरया गतेभ्यो मोक्षं सदा नमो भवतु ।
यस्य यत्र मलविगमः तस्य तत्रैव मुक्तिपदम् ॥ ७२३ ॥

एवंविहदुन्नयनिर-सणत्थमच्चंतसुद्धबुद्धीहिं ।
लोयग्गमुवगयाणं, पयमेवं पयडमुवइट्ठं ॥ ७२४ ॥
एवंविधदुर्नयनिरसनार्थमत्यन्तशुद्धबुद्धिभिः ।
लोकाग्रमुपगतेभ्यः पदमेवं प्रकटमुपदिष्टम् ॥ ७२४ ॥

ईषत्प्राग्भारा लोगो चउदसरज्जू, इसिपब्भाराभिहाणवरपुढवी ।
लोयग्गथूभिया सा, सीया य जिणागमपसिद्धा ७२५
लोकश्चतुर्दशरज्जुरीषत्प्राग्भाराभिधानवरपृथिवी ।
लोकाग्रस्तूभिता सा सिता च जिनागमप्रसिद्धा ॥७२५॥

तेसिं उवरिं गंतू-ण जोयणं तस्स उवरिमे कोसे ।
उवरिमछब्भायम्मी, लोयग्गं सिवपयं मुत्ती ॥७२६॥
तेषामुपरि गत्वा योजनं तस्योपरिमे क्रोशे ।
उपरिमषड्भागे लोकाग्रं शिवपदं मुक्तिः ॥ ७२६ ॥

